महाद्भुताङ्गविक्षेपकलितं भारतीविधम् ।
आहुः पुरुषनाट्यं च पुरुषेषु प्रशस्यते ॥ ३६ ॥

कैशिकी श्लक्ष्णनैपथ्या शृङ्गाररससंभवा ।
अशक्या पुरुषैः साधु प्रयोक्तुं स्त्रीजनादृते ॥ ३७ ॥

ततोऽसृजन्महातेजा मनसाऽप्सरसो विभुः ।
मञ्जुकेशीं सुकेशीं च मिश्रकेशीं सुलोचनाम् ।
सौदामनीं देवदत्तां देवसेनां मनोरमाम् ॥ ३८ ॥

सुकुमारमनीषाणामादिशन्नाट्यसिद्धये ।
तासां संगीतशिक्षायै नारदादिमहामुनीन् ॥ ३९ ॥

नियम्य धाता तासां तु पतिमिन्द्रं तदाऽकरोत् ।
अभ्यस्यन्ति स्म ता नाट्यं मञ्जुकेश्यादयः स्त्रियः ॥ ४० ॥

कदाचिद्भरताचार्यो रम्ये मन्दरपर्वते ।
उपादिशत चाङ्गीकवाचिकाहार्यसात्त्विकान् ॥ ४१ ॥

चतुर्विधानभिनयान्नाट्यभेदांस्तथैव च ।
श्रुतिस्वरसमायुक्तरागात्मकसुगीतकान् ॥ ४२ ॥

चतुर्विधान्वाद्यभेदांस्ततानद्धघनादिकान् ।
सस्वरज्ञानलयकं मर्मकर्माणि सर्वतः ।
कैशिकीनाट्यसंभेदान्सम्यक्तासामुपादिशत् ॥ ४३ ॥

भरतः साप्सरःसंघैर्नृत्तगीतविशारदैः ।
इन्द्रध्वजोत्सवे प्राप्ते प्रायाद्देवसभां मुदा ॥ ४४ ॥

ब्रह्मणा समनुज्ञातो नाट्यपाटविशारदः ।
नाटकं चेन्द्रविजयं नाम्ना कृत्वा प्रयोगकम् ॥ ४५ ॥

सूत्रपात्रक्रमं सम्यङ् निर्धार्याशु सुनैपुणः ।
पाकशासनमादित्यसहस्रमकुटोज्ज्वलम् ॥ ४६ ॥

नीलाङ्गसुन्दरतरं पीताम्बरमनोहरम् ।
विद्याधरीकराधूतचामरद्वयशोभितम् ॥ ४७ ॥

मुक्तातपत्रविलसत्किरीटद्युतिराजितम् ।
महर्षिभिः प्रकृतिभिः सेव्यमानं सुरोत्तमैः ॥ ४८ ॥

आखण्डलं महाबाहुं विद्याद्यैश्च महामुनिः ।
जयशब्दाभिपूर्वं च स्तुत्वा नाट्यविधानतः ॥ ४९ ॥

महेन्द्रविजयं नाम तदारभत नाटकम् ।
तत्र दिव्यसभामध्ये प्रस्तावनपुरस्कृतम् ॥ ५० ॥

केचित्तालधराश्चैव श्रुतिकाराश्च केचन ।
तथा केचित्सूत्रधाराः केचिन्मार्दङ्गिकास्तथा ॥ ५१ ॥

नारदाद्याः सगन्धर्वा वैणिका वैणवाः परे ।
सौदामनीमञ्जुकेशीमुख्या दिव्यविभूषणाः ॥ ५२ ॥

चतुर्विधाभिनयगकैशिकीमार्गतत्पराः ।
पात्राणि भूत्वाऽनेकानि ननृतुर्नाट्यमद्भुतम् ॥ ५३ ॥

शृङ्गारादिरसैर्युक्तं पश्यन्ती साऽद्भुतं सभा ।
तस्थौ चित्रवदत्यन्तं सुकुमारं सुनाट्यकम् ॥ ५४ ॥

अत्यन्तगानमाधुर्यं श्रवणानन्दकारणम् ।
श्रुत्वा तदद्भुतं साक्षात्सहस्राक्षः प्रसन्नधीः ॥ ५५ ॥

हारकेयूरमकुटदिव्याम्बरमुखैः प्रियैः ।
दानमानादिसत्कारैः संपूज्य च महानटम् ॥ ५६ ॥

उवाचात्यन्तसंतुष्टश्चात्मनो जयमद्भुतम् ।
सभानुरञ्जनकरमिदानीं भरतर्षभ ॥ ५७ ॥

श्रावितोऽस्मि महाप्राज्ञ मत्सभाभूषणं शुभम् ।
वरं वरय भद्रं ते त्रैलोक्ये यद्यदिच्छसि ॥ ५८ ॥

इत्युक्तो भरतो वव्रे नाट्यरङ्गस्थलं शुभम् ।
तद्रङ्गमण्डपविधिं यथाशास्त्रं स वृत्रहा ॥ ५९ ॥

निर्माय शिल्पनिपुणैर्विश्वकर्मादिभिस्तथा ।
प्रददौ भरताय द्राक्तद्विधानक्रमो यथा ॥ ६० ॥

हस्तदण्डप्रमाणलक्षणमाह—

अणवोऽष्टौ रजस्तानि फालमष्टौ तथा पुनः ।
तान्यष्टौ लिक्षमित्याहुस्तान्यष्टौ यूकमुच्यते ॥ ६१ ॥

यूकाष्टकं यवं प्राहुस्तान्यष्टावङ्गुलं तथा ।
चतुर्विंशत्याऽङ्गुलानां शिल्पिहस्तः प्रकीर्तितः ॥ ६२ ॥

अष्टोत्तरं शतं तेषां हस्तानां रङ्गमण्डपम् ।
उत्तमं तद्विदः प्राहुर्देवयोग्यं तथैव च ॥ ६३ ॥

चतुःषष्टिर्मध्यमं स्यात्कनिष्ठं तु तदर्धकम् ।
क्रमाद्देवादिकानां च योग्यं त्रिचतुरश्रकम् ॥ ६४ ॥

विकृष्टं चोन्नतकरं समं तु चतुरश्रकम् ।
त्रिकोणं मध्यमं त्र्यश्रं सर्वसाधारणं तथा ॥ ६५ ॥

शतं च मानुषं रङ्गमण्डपं योग्यमुच्यते ।
दिव्यचित्रावलीयुक्तं सर्वलक्षणसंयुतम् ॥ ६६ ॥

नानारत्नसमाकीर्णं सर्वरक्षायुतं तथा ।
सेवितं ब्रह्मरुद्राद्यैर्वसुदिक्पतिभिः सुरैः ॥ ६७ ॥

सांनिध्यकृद्भिः संयुक्तमद्भुतं रत्नजालकम् ।
ईदृश्यां नाट्यशालायां सुराचार्यपुरस्कृतः ॥ ६८ ॥

भरताचार्यमुख्यैश्च नाट्यगीतविशारदैः ।
सहितो वज्रपाणिस्तु भद्रासनमुपेयिवान् ॥ ६९ ॥

तत्र चाप्सरसां संघान्भरतोऽनर्तयत्तथा ।
तत्र विघ्नो महाञ्जातः सर्ववाग्बन्धकारकः ॥ ७० ॥

तं समीक्ष्य सहस्राक्षो महाग्रहसमन्वितः ।
निजध्वजमुपादाय विघ्नरूपांस्तु राक्षसान् ।
जघान रङ्गमध्यस्थान्पलायनपरांश्च तान् ॥ ७१ ॥

तत्प्रहारसमुद्भूतः कश्चिद्वाद्यविशेषकः ।
जर्जरी नाम सा प्रोक्ता वज्रायुधसुरक्षिता ॥ ७२ ॥

पञ्चपर्वसमायुक्ता ब्रह्मादिसुरसंनुता ।
विरूपाक्षादिरक्षांसि निघ्नती विघ्नहारिणी ॥ ७३ ॥

रङ्गाधिदेवताः सर्वा आराध्यन्त विशेषतः ।
स्वस्तिवाचनपूर्वं च ब्रह्मघोषयुतं तथा ॥ ७४ ॥

एवं नित्योत्सवयुतं रङ्गमण्डपमुत्तमम् ।
भरताचार्यवर्यस्तु स्वशिष्यैरपि संयुतः ॥ ७५ ॥

मङ्गलालम्बिनान्द्यादिदिव्यभूषणभूषितः ।
सभापतिश्च सभ्याश्चाङ्गनागणयुतास्तथा ॥ ७६ ॥

नटद्यो नटाश्च मोदन्ते यत्रान्योन्यानुरञ्जनात् ।
स रङ्ग इति विज्ञेयः स एवाग्रे प्रकीर्तितः ॥ ७७ ॥

यन्नाट्यवस्तुनः पूर्वं रङ्गविघ्नोपशान्तये ।
कुशीलवाः प्रकुर्वन्ति पूर्वरङ्गः स कीर्तितः ॥ ७८ ॥

यद्यप्यङ्गानि भूयांसि पूर्वरङ्गस्य नाटके ।
तेषामवश्यकर्तव्या नान्दी नन्दीश्वरप्रिया ॥ ७९ ॥

अष्टभिस्तु पदैरेषा निबद्धा स्वर्णदायिनी ।
द्वांविंशतिपदा नान्दी भुक्तिमुक्तिप्रदा भवेत् ॥ ८० ॥

तत्र सूत्रलक्षणमाह—

नानाविधाभिनयसंसूचनं सूत्रमुच्यते ।
तद्धारणात्सूत्रधार इति तज्ज्ञैरुदाहृतः ॥ ८१ ॥

तत्र रङ्गस्थले दिव्यान्देवानावाहयच्छुचिः ।
सर्वेश्वरं वासुदेवं ब्रह्माणं चन्द्रशेखरम् ॥ ८२ ॥

महेन्द्रं कार्त्तिकेयं च श्रियं वाणीं सरस्वतीम् ।
पुष्पवन्तौ सिद्धिबुद्धी स्मृतिं मेधां सशक्तिकाम् ॥ ८३ ॥

दिक्पालकान्समरुतः स्वधास्वाहायुतानलम् ।
फणिराट्चक्रगरुडसप्तोदधिमहामुनीन् ॥ ८४ ॥

यक्षराक्षसपैशाचगुह्यकादींस्ततस्ततः ।
आवाह्य विधिवत्पूजामकरोद्भरताग्रणीः ॥ ८५ ॥

तत्र निर्विघ्नकरणं गणनाथमपूजयत् ।
अष्टाङ्गपदतालाढ्यनान्दीमङ्गलपूर्वकम् ।
पुष्पाञ्जलिं पुरस्कृत्य रङ्गपीठासनस्थितः ॥ ८६ ॥

वीणावेणुमृदङ्गवादनपरा गानोन्मुखाः सूत्रका-
स्तालस्वस्तिकधारिणः कुशलिनश्चक्रुस्तथोपक्रमम् ।
देवेन्द्रैकजयप्रदं सुरुचिरं दिव्याप्सरःसंहितं
दिव्यं रूपकमद्भुतं सुविलसत्कैशिक्यमानर्तयन् ॥ ८७ ॥

नवरसभावितहावभावयुक्तं
सललितविभ्रमसद्विलासहास्यम् ।
शुभकिलिकिञ्चितदिव्यसारयुक्त
सरससुनाट्यमतोषयत्सभां ताम् ॥ ८८ ॥

अङ्गप्रत्यङ्गसहितोपाङ्गरूपक्रियायुतम् ।
हस्तभेदांश्चतुःषष्टिं सानुभावं विशेषयत् ॥ ८९ ॥

सर्वनेत्रोत्सवकरं सभारञ्जनकारकम् ।
चेतनाचेतनकरं चेतयच्चाप्यचेतनान् ॥ ९० ॥

तौर्यत्रिकप्रपञ्चोत्थनादब्रह्ममयं शुभम् ।
ब्रह्माण्डभाण्डकुहरह्रदशृङ्गारवैभवम् ॥ ९१ ॥

शृङ्गाररसकल्लोलसमाक्रान्ताः सभासदः ।
दृष्ट्वा प्रयोगचातुर्यं ब्रह्माद्याः सर्वदेवताः ।
मुदा परमया युक्ता भरतं साध्वपूजयन् ॥ ९२ ॥

कदाचिद्भरताचार्यः शिष्यबृन्दयुतो मुनिः ।
कैलासमगमत्तत्र महानटसिसेविपुः ॥ ९३ ॥

दाक्षायण्या सहासीनं महादेवं प्रणम्य च ।
चतुर्विधं नाट्यभेदं स्वशिष्यैः समनर्तयत् ॥ ९४ ॥

महेश्वरस्तु संतुष्टः स्वनाट्यं ताण्डवोद्भवम् ।
अद्भुतं षोडशविधं पार्वत्यास्तु तथैव च ।
लास्यक्रमं सप्तविधं नन्दिकेशमुखाददात् ॥ ९५ ॥

अथादिदेश भरतं सर्वलोकोपकारकम् ।
सविस्तरं नाट्यशास्त्रं धर्मकामार्थमोक्षदम् ॥ ९६ ॥

शिष्यानुशिष्यमुखतः प्रसिद्धं तत्तदा कुरु ।
त्वन्नाम्ना चैव नाट्यं तु प्रबद्धं तद्भविष्यति ॥ ९७ ॥

एवं शिवकटाक्षाप्तनाट्यसाम्राज्यधूर्वहः ।
भक्त्या स्तुत्वा महादेवं नन्दिप्रमथपूर्वकम् ॥ ९८ ॥

अनुज्ञात उपागत्य मरीचेराश्रमं ततः ।
न्यवेदयत तत्सारमीश्वरस्य प्रसादजम् ॥ ९९ ॥

मरीचिश्च स्वपुत्राय कश्यपाय न्यवेदयत् ।
स याज्ञवल्क्यमुनय आञ्जनेयाय सोऽपि च ॥ १०० ॥

हनूमाञ्शिष्यसहितः संगायन्विचचार ह ।
तत्र तत्र वनोद्देशे गायनास्तमनूजगुः ॥ १०१ ॥

नारदस्तुम्बुरुश्चैव द्वावागत्य मरुत्सुतम् ।
श्रद्धया द्वौ मुनी ह्येतौ गुण्डक्रियमगायताम् ॥ १०२ ॥

तद्गीतश्रवणात्सद्यो गीतायन्ते शिलास्तदा ।
ततो भरतशिष्याणामुच्यते दैवतं परम् ॥ १०३ ॥

मरीच्यत्रिमुखाश्चैव मतङ्गो याष्टिकस्तथा ।
दुर्गा शक्तिश्च शार्दूलो रम्भा चार्जुन एव च ॥ १०४ ॥

आञ्जनेयो नारदश्च नन्दिकेशः षडाननः ।
अगस्त्यश्च्यवनश्चैव भरतागमकारकाः ॥ १०५ ॥

॥ इति स्कान्दपुराणे संग्रहचूडामणौ
प्रथमोऽध्यायः ॥

---

## ॥ द्वितीयोऽध्यायः ॥

---

नृत्यं गीतं च वाद्यं च दृश्यं श्राव्यं मनोहरम् ।
संगीतं प्रोच्यते तज्ज्ञैः संगीतं सामवेदजम् ॥ १ ॥

गान्धर्वजनकं चैव सामगानं शिवप्रियम् ।
वेदानां सामवेदोऽस्मीत्याह श्रीभगवान्हरिः ॥ २ ॥

तत्र साममहावेदे गान्धर्वमुपवेदकम् ।
ब्रह्माऽसृजत्सृष्टिकाले देवांश्चादावगापयत् ॥ ३ ॥

भगवानथ गोविन्दो गोपिकावृन्दवन्दितः ।
वेणुगानरतो नित्यं नृत्यवाद्यविशारदः ॥ ४ ॥

गोपिकामण्डले कृष्णो रासक्रीडाविलासकृत् ।
गोपीगोपालगोप्रीत्यै वेणुवादनमातनोत् ॥ ५ ॥

शिशुपशुफणिनामतीव हृद्यं
सुचिरविलासमनोहरं प्रकामम् ।
श्रुतिविषयमहासुखं त्रिलोकी-
प्रथमरसं प्रवदन्ति गीतमार्याः ॥ ६ ॥

संगीतमपि साहित्यं सरस्वत्याः स्तनद्वयम् ।
आद्यमापातमधुरमन्यदालोचनामृतम् ॥ ७ ॥

सदाऽऽनन्दैकनिलयं सर्वेषां प्राणिनामपि ।
स्थाणूनां पल्लवकरं द्रावयच्च शिलामपि ॥ ८ ॥

चित्तवैक्लव्यहरणं चित्ररूपकरं नृणाम् ।
क्षुत्पिपासाश्रमहरं यतीनां चित्तमोहनम् ॥ ९ ॥

संगीतं तत्सरिगमपधनीति च सप्तभिः ।
स्वराक्षरैर्युतं चित्रं मतिविस्तारकारकम् ॥ १० ॥

संगीतं द्विविधं प्रोक्तं गान्धर्वं गानमेव च ।
देवगन्धर्वलोकेषु प्रसिद्धं संप्रदायतः ॥ ११ ॥

गान्धर्वं सकलाभीष्टदायकं देवपूजितम् ।
गान्धर्वं लक्षणैर्युक्तं प्रीतिदं शुभदायकम् ॥ १२ ॥

गानं तु भरताचार्यशार्ङ्गदेवादिलक्षितम् ।
मनुष्याणां श्रुतिमनोरञ्जनं चेष्टसिद्धिदम् ॥ १३ ॥

लक्ष्यलक्षणसंयुक्तं नित्यं श्राव्यं मनीषिभिः ।
अलक्ष्यलक्षणयुतं त्याज्यमाहुर्विपश्चितः ॥ १४ ॥

सल्लक्ष्यलक्षणयुतं जनरञ्जनकारणम् ।
लक्ष्यास्पदं लक्षणं तु लक्ष्यं लक्षणकारकम् ॥ १५ ॥

न्यासग्रहांशनियमावेदकं शास्त्रमुच्यते ।
तथा हि भैरवीरागं सन्यासांशग्रहं विदुः ॥ १६ ॥

लक्ष्यं तु धग्रहन्यासांशयुतं प्रसमीक्ष्यते ।
धांशन्यासग्रहस्त्वस्य गाने सर्वरसास्पदम् ॥ १७ ॥

लक्ष्यं तु सन्यासयुतं सांशं संपूर्णमुच्मताम् ।
सुसंप्रदायसंभूतं गान्धर्वं गानमेव च ॥ १८ ॥

लक्ष्यलक्षणयोश्चैव ह्यसंगत्याऽपि चेत्कृतम् ।
तच्छास्त्रासंमतं गानमार्या अश्राव्यमूचिरे ॥ १९ ॥

तस्मात्सलक्षणं लक्ष्यसंयुक्तं सुलभं नृणाम् ।
दिव्यशारीरसंपत्त्या तन्त्रीकण्ठसमत्वतः ॥ २० ॥

सरसं दिवि गान्धर्वं देवा गायन्ति सर्वशः ।
इहापि वायुपुत्राद्याः शास्त्रसंमतमाचरन् ॥ २१ ॥

चिराद्विरलभावं तत्प्राप्तं तद्विदभावतः ।
कालात्केचित्तु तद्गानं तत्तद्देशानुरञ्जनम् ॥ २२ ॥

देशभेदाद्रागभेदाद्यथाचित्तानुरञ्जनम् ।
गायन्ति शास्त्रमुत्सृज्य मनःकल्पितमार्गतः ॥ २३ ॥

शार्ङ्गदेवादयस्तत्र विशन्तः शास्त्रमार्गतः ।
नानादेशविभागादिरागरञ्जनसंयुतम् ॥ २४ ॥

गानं लक्ष्यानुरूपेण लक्षणेन विवृण्वते ।
नानादेशादिरागाणां गानमेवं प्रचक्षते ॥ २५ ॥

गानं तु स्वरमूलं स्यात्स्वराश्च श्रुतिसंभवाः ।
श्रुतिस्वरस्वरूपं च तथा त्रिस्थानलक्षणम् ॥ २६ ॥

वादिसंवाद्यनूवादिविवादिकथनं ततः ।
जातिभेदैश्च शुद्धानां विकृतानां च लक्षणम् ॥ २७ ॥

ततः स्वरादिभेदेन ग्राममूर्च्छनयोर्गतिः ।
अनन्तरं शुद्धतानकूटतानकमीरितम् ।
प्रस्तारश्च ततो रागमेललक्षणमुच्यते ॥ २८ ॥

नृत्यवाद्यादिभेदानां लक्षणं तालवर्णनम् ।
तत्प्राणदशकं चैव प्रोच्यते क्रमशो मुने ॥ २९ ॥

पुरुषस्य विवक्षायां मानसे बोधमागते ।
गात्राग्निना गन्धवहश्चोर्ध्वमागत्य देहिनाम् ॥ ३० ॥

नाभिहृत्कण्ठमूर्धास्यसंभवो नाद ईरितः ।
पञ्चस्थानभवश्चैव पञ्चाख्या लभते तु सः ॥ ३१ ॥

अतिसूक्ष्मश्च सूक्ष्मश्च पुष्टोऽपुष्टस्ततः परम् ।
तथैव कृत्रिमश्चेति क्रमान्नादा हि जज्ञिरे ॥ ३२ ॥

हृत्कण्ठमूर्धविश्रामान्मन्द्रमध्यमतारकान् ।
उत्तरोत्तरमुद्दामद्विगुणीकृतनादतः ।
स्थानत्रयविभागेन गीततन्त्रे प्रचक्षते ॥ ३३ ॥

मन्द्रमध्यमताराश्च किंचिन्न्यूनातिनादतः ।
अनुमन्द्रातितारारव्यामवापुर्द्विविधां गतिम् ॥ ३४ ॥

श्रुतिलक्षणम्—

नादा द्वाविंशतिर्ये च श्रुतिभेदादुदाहृताः ।
आद्या साव्यक्तजननी स्वराङ्गा ह्रस्वमात्रका ॥ ३५ ॥

बिन्दुनादकलां प्राह यामाधारां परा श्रुतिः ।
सा मात्रा हृत्पुटीमध्यनाडिकात्रिकगामिनी ॥ ३६ ॥

द्वाविंशत्या तु नाडीभिस्तिर्यग्गतिभिरीरिता ।
नाडीनां पद्धतिश्चैव भाति सोपानमार्गवत् ॥ ३७ ॥

तत्रारोहणवेलायामनिलस्य तदात्मना ।
द्वाविंशतिविधा भान्ति श्रुतयश्चोत्तरोत्तराः ॥ ३८ ॥

कण्ठमूर्धान्तरालस्थमध्यमारुतसंयुताः ।
मन्द्रोच्चतारविलसत्त्रिस्थानरमणीयकाः ॥ ३९ ॥

अथ श्रुतिजन्यसप्तस्वरलक्षणम्—

नादब्रह्मणि संभूताः साक्षराः स्वरसंज्ञकाः ।
सप्त स्वराः स्युर्विस्तारं गताश्चित्रपटी यथा ॥ ४० ॥

षड्जर्षभौ च गान्धारो मध्यमः पञ्चमस्तथा ।
धैवतश्च निषादश्च स्वराः सप्त समीरिताः ॥ ४१ ॥

एवं त्रयोविंशतिस्तु ये स्वरा विकृता मताः ।
तथा सप्त प्रकृतयः सर्वे त्रिंशदुदाहृताः ॥ ४२ ॥

तत्सप्तप्रकृतिस्वरेषु विकृतश्रेष्ठास्तु संमेलना-
न्मेलानन्तरजातभेदजनकाः सर्वेऽपि रागास्तथा ।
भूत्वा सर्वजगत्त्रयीसुजनतानन्दाब्धिकल्लोलसं-
मोदाखेलनमाचरन्ति विविधं तौर्यत्रिकस्रोतसि ॥

॥ इति स्कान्दपुराणे संग्रहचूडामणौ
द्वितीयोऽध्यायः ॥

---

## ॥ तृतीयोऽध्यायः ॥

---

गौर्युवाच—

भगवन्देवदेश दयां कुरु कृपानिधे ।
लक्षणं वै श्रुतीनां च तत्सप्तस्वरलक्षणम् ॥ १ ॥

तथा विकृतिभेदांश्च लक्षणं चोभयोरपि ।
उभयात्मकमेलांश्च तद्भवान्रागसंचयान् ।
विस्तरेण महादेव मम ब्रूहि विशेषतः ॥ २ ॥

शिवः—द्वाविंशतौ हि नाडीषु परानादेऽनिलागमात् ।
क्रमादारोहणं प्राप्ते तादृश्यः श्रुतयोऽभवन् ॥ ३ ॥

द्वाविंशतिश्रुतीनां च नामानि शृणु पार्वति ।
प्रथमा च द्वितीयाऽथ तृतीया च चतुर्थ्यपि ॥ ४ ॥

पञ्चमी षष्ठिका सप्तम्यष्टमी नवमी तथा ।
दशम्येकादशी चैव द्वादशी च त्रयोदशी ॥ ५ ॥

चतुर्दशी पञ्चदशी षोडशी सप्तदश्यपि ।
अष्टादशी तथैवोनविंशी विंशी तथा श्रुतिः ॥ ६ ॥

एकविंशी श्रुतिश्चैव द्वाविंशीतीरितं क्रमात् ।
पुनरन्यानि शृणु मे प्रतिनामानि तत्क्रमात् ॥ ७ ॥

तीव्रा कुमुद्वती मन्दा च्छन्दोवती दयावती ।
रञ्जनी रतिका रौद्री क्रोधा वज्री प्रसारिणी ॥ ८ ॥

प्रीतिश्च मार्जनी चैव क्षिती रक्ता तथैव च ।
संदीपन्यालापिनी च मदन्ती रोहिणी तथा ।
रम्योग्रा क्षोभिणीति द्वाविंशतिः श्रुतयो मताः ॥ ९ ॥

नादस्तीव्रामुपागम्य रिषभं समजीजनत् ।
मन्दकां स समागम्य गान्धारजनकोऽभवत् ॥ १० ॥

स नादः क्रोधया युक्तोऽजनयन्मध्यमं तथा ।
स मार्जनीं समागम्याजनयत्पञ्चमं स्वरम् ॥ ११ ॥

स नादः क्षितिसंप्राप्तो धैवतं समजीजनत् ।
सोऽथ संदीपनीं प्राप्य निषादजनकोऽभवत् ॥ १२ ॥

तस्मिंश्च क्षोभिणीं प्राप्ते षड्जः समभवत्स्वरः ।
द्वाविंशतौ श्रुतिष्वेवमभवन्रिषभादयः ।
षड्जान्ताः प्रतिशुद्धाख्याः स्वराः सप्त क्रमाच्छुभे ॥ १३ ॥

'रि ग म प ध नि स' इति ।

तेषु पञ्चमषड्जौ च निश्चलौ भेदवर्जितौ ।
मध्यमस्तु चतुर्भेदः षड्भेदा इतरे मताः ॥ १४ ॥

तथा च १. प्रतिशुद्धरिषभः, २. शुद्धरिषभः, ३. प्रतिचतुः- श्रुतिरिषभः, ४. चतुःश्रुतिरिषभः, ५. प्रतिषट्श्रुतिरिषभः, ६. षट्श्रुतिरिषभः ; एवं रिषभः षड्विधः । १. प्रतिशुद्धगान्धारः, २. शुद्धगान्धारः, ३. प्रतिसाधारणगान्धारः, ४. साधारणगान्धारः, ५. प्रत्यन्तरगान्धारः, ६. अन्तरगान्धारः ; एवं गान्धारः षड्विधः । १. प्रतिशुद्धमध्यमः, २. शुद्धमध्यमः, ३. प्रत्यन्तरमध्यमः, ४. प्रतिमध्यमः ; एवं मध्यमश्चतुर्विधः । १. प्रतिशुद्धधैवतः, २. शुद्धधैवतः, ३. प्रतिचतुःश्रुतिधैवतः, ४. चतुःश्रुतिधैवतः, ५. प्रतिषट्श्रुतिधैवतः, ६. षट्श्रुतिधैवतः; एवं धैवतः षड्विधः । १. प्रतिशुद्धनिषादः, २. शुद्धनिषादः, ३. प्रतिकैशिकनिषादः, ४. कैशिकनिषादः, ५. प्रतिकाकलिनिषादः, ६. काकलिनिषादः ; एवं निषादः षड्विधः ।

त्रयोविंशद्विकृतयः सप्त प्रकृतयस्तथा ।
स्वरास्त्रिंशत्समुद्भूता द्वाविंशतिगतास्तदा ।
श्रुतिष्वष्टैव मिश्राख्याः स्वरा द्वाविंशतौ स्मृताः ॥ १५ ॥

तत्तद्गतश्रुतीनां च मिश्राणां च यथाक्रमम् ।
लक्षणं प्रोच्यते देवि सावधानमनाः शृणु ॥ १६ ॥

आद्यादारभ्य षष्ठपदपर्यन्तं षड् रिषभा जाताः । तृतीयादारभ्याष्टमपदपर्यन्तं षड् गान्धारा जाताः । नवमादारभ्य द्वादशपदपर्यन्तं चत्वारो मध्यमा जाताः । त्रयोदशपदे पञ्चमः स्वरो जातः । चतुर्दशादारभ्यैकोनविंशपदपर्यन्तं षड् धैवता जाताः । षोडशादारभ्यैकविंशपदपर्यन्तं षण्णिषादा जाताः । द्वाविंशपदे षड्जस्वरो जातः । एवं द्वाविंशतौ पदेषु त्रिंशत्स्वरा जाताः ॥

अतः परं तत्तत्पदस्वरतत्तन्मिश्राणां संज्ञा उच्यन्ते । तीव्राख्ये प्रथमपदे यो रिषभोऽजनि स एव प्रतिशुद्धरिषभ इत्युच्यते । कुमुद्वत्याख्ये द्वितीयपदे शुद्धरिषभो जातः । मन्दाख्ये तृतीयपदे प्रतिचतुःश्रुतिरिषभः प्रतिशुद्धगान्धारश्चेत्युभौ जातौ । छन्दोवत्याख्ये चतुर्थपदे चतुःश्रुतिरिषभः शुद्धगान्धारश्चेति द्वौ जातौ । दयावत्याख्ये पञ्चमपदे प्रतिषट्श्रुतिरिषभः प्रतिसाधारणगान्धारश्चेत्युभौ जातौ । रञ्जन्याख्ये षष्ठपदे षट्श्रुतिरिषभः साधारणगान्धारश्चेत्युभौ जातौ । रत्तिकाख्ये सप्तमपदे प्रत्यन्तरगान्धारो जातः । रौद्र्याख्येऽष्टमपदेऽन्तरगान्धारोऽजनि । क्रोधाख्ये नवमपदे प्रतिशुद्धमध्यमो जातः । वज्रिकाख्ये दशमपदे शुद्धमध्यमो जातः । प्रसारिण्याख्य एकादशपदे प्रत्यन्तरमध्यमो जातः । प्रीत्याख्ये द्वादशपदे प्रतिमध्यमो जातः । मार्जन्याख्ये त्रयोदशपदे पञ्चमो जातः । क्षित्याख्ये चतुर्दशपदे प्रतिशुद्धधैवतो जातः । रक्ताख्ये पञ्चदशपदे शुद्धधैवतो जातः । संदीपन्याख्ये षोडशपदे प्रतिचतुःश्रुतिधैवतः प्रतिशुद्धनिषादश्चेत्युभौ जातौ । आलापिन्याख्ये सप्तदशपदे चतुःश्रुतिधैवतः

शुद्धनिषादश्चेत्युभौ जातौ । मदन्त्याख्येऽष्टादशपदे प्रतिषट्श्रुतिधैवतः प्रतिकैशिकनिषादश्चेत्युभौ जातौ । रोहिण्याख्य ऊनविंशपदे षट्श्रुतिधैवतः कैशिकनिषादश्चेत्युभौ जातौ । रम्याख्ये विंशपदे प्रतिकाकलिनिषादो जातः । उग्राख्य एकविंशपदे काकलिनिषादो जातः । क्षोभिण्याख्ये द्वाविंशपदे षड्जो जातः । इति श्रुतिजन्यस्वरलक्षणम् ।

अथ मेलप्रस्तारलक्षणम् ।

प्रतिशुद्धषभाज्जाता रिषभाः पञ्च कीर्तिताः ।
प्रतिशुद्धर्षभस्याधः शुद्धर्षभ उदाहृतः ॥ १७ ॥

तदधस्तु प्रतिचतुःश्रुती रिषभ एव च ।
अधश्चतुःश्रुत्यृषभस्तदधः प्रतिषट्श्रुतिः ॥ १८ ॥

अधः षट्श्रुतियुक्तश्च रिषभो लिख्यते क्रमात् ।
एवं षड्रिषभीजातः प्रस्तारक्रम ईरितः ॥ १९ ॥

गान्धारधैवतनिषादमथर्षभाध-
स्तस्याधराधरमथापि यथाक्रमं स्यात् ।
गान्धारधैवतनिषादमुखस्वाराणा-
मेवं क्रमादधरतां जनयन्ति सर्वे ॥ २० ॥

मध्यमस्य चतुर्भेदास्तदधस्तदसंभवः ।
प्रतिशुद्धाख्यरिषभात्षड्जान्तान्पङ्क्तितो लिखेत् ॥ २१ ॥

प्रतिशुद्धनिषादाधो जातः शुद्धनिषादकः ।
वामपार्श्वे लेखनीयाः स्वराः पूर्वे यथाक्रमम् ॥ २२ ॥

तदधः प्रतिकैशिक्याख्यनिषादः स जायते ।
पूर्वस्वरा लेखनीया वामपार्श्वे यथाक्रमम् ॥ २३ ॥

प्रतिकैशिकनैषादादधः कैशिकिसंभवः ।
समालिखेत्स्वरान्पूर्वान्वामपार्श्वे यथाक्रमम् ॥ २४ ॥

तत्कैशिकिनिषादाधः प्रतिकाकलिसंभवः ।
स्वरांस्तथैव विलिखेद्वामपार्श्वे यथाक्रमम् ॥ २५ ॥

प्रतिकाकलितोऽधस्तु काकलिस्वरसंभवः ।
समालिखेत्स्वरान्पूर्वं वामपार्श्वे यथाक्रमम् ।
तत्काकलिनिषादाधस्त्वभावात्तदसंभवः ॥ २६ ॥

अथ धैवतप्रस्तारः—

प्रस्तारः प्रतिशुद्धस्य धैवतस्याथ जायते ।
शुद्धधैवत एवादौ वामपार्श्वे यथाक्रमम् ॥ २७ ॥

दक्षिणे प्रतिशुद्धाख्यनिषाद उपजायते ।
तदधो जायते शुद्धनिषादो वामतः क्रमात् ॥ २८ ॥

दक्षिणे शुद्धनैषादादधस्तात्प्रतिकैशिकः ।
वामपार्श्वे लेखनीया यथाक्रममथ स्वराः ॥ २९ ॥

दक्षिणे प्रतिकैशिक्यनिषादादथ कैशिकः ।
स्वरांस्तानेव विलिखेद्वामपार्श्वे यथाक्रमम् ॥ ३० ॥

प्रतिकाकलिनैषादादधः काकलिसंभवः ।
यथाक्रमं वामपार्श्वे तदधस्तान्न जायते ॥ ३१ ॥

शुद्धस्याधो धैवतस्य लेख्यः प्रतिचतुःश्रुतिः ।
वामे स्वरा यथापूर्वं सव्ये शुद्धनिषादकः ॥ ३२ ॥

तदधः प्रतिकैशिक्यनिषादः संभवेत्किल ।
ततः स्वराल्ँ लिखेदेव वामपार्श्वे यथाक्रमम् ॥ ३३ ॥

तदधः कैशिको जातो वामपार्श्वे यथोपरि ।
तत्कैशिकनिषादाधः संभवेत्प्रतिकाकलिः ॥ ३४ ॥

तद्वामे विलिखेत्प्राज्ञः स्वरान्पूर्वान्यथाक्रमम् ।
प्रतिकाकलिनैषादादधः काकलिसंभवः ॥ ३५ ॥

यथाक्रमं वामपार्श्वे तदधस्तान्न संभवः ।
चतुःश्रुतिर्धैवतः स्यादधः प्रतिचतुःश्रुतेः ॥ ३६ ॥

यथाक्रमं वामपार्श्वे दक्षिणे प्रतिकैशिकः ।
तदधः कैशिको जातो वामपार्श्वे यथोपरि ॥ ३७ ॥

सव्ये कैशिकनैषादादधः स्यात्प्रतिकाकलिः ।
यथाक्रमं वामपार्श्वे स्वरा लेख्या विचक्षणैः ॥ ३८ ॥

निषादः काकलिरधः सव्यस्थप्रतिकाकलेः ।
वामपार्श्वे लेखनीयं यथास्वरमुदीरितः ।
ततः प्रस्तारविरहाद्भेद एव न जायते ॥ ३९ ॥

चतुःश्रुतिधैवताधः प्रतिषट्श्रुतिधैवतः ।
यथास्वरं वामपार्श्वे दक्षिणे कैशिकं लिखेत् ॥ ४० ॥

तदधः प्रतिकाकल्या निषादं विलिखेत्सुधीः ।
यथास्वरं वामपार्श्वे लेखनीयं मनीषिभिः ॥ ४१ ॥

दक्षिणे प्रतिकाकल्या अधस्तात्काकलिर्भवेत् ।
यथास्वरं वामपार्श्वे प्रस्तारो न भवेत्ततः ॥ ४२ ॥

तदधः षट्श्रुतिर्लेख्यो वामतस्तु यथास्वरम् ।
दक्षिणे प्रतिकाकल्या निषादोऽधोऽथ काकलिः ॥ ४३ ॥

यथास्वरं वामपार्श्वे लेखनीयं विचक्षणैः ।
ततः प्रस्तारविरहाद्भेद एव न जायते ।
इत्येवमादिमं चक्रं समग्रं वर्णितं शिवे ॥ ४४ ॥

इत्यादिमं चक्रम् ॥

अथ द्वितीयचक्रलक्षणं प्रस्तारयति—

अथ षट्श्रुतिकाकल्योरप्रस्तारतया तथा ।
वामस्थितं समुच्चार्य पञ्चमं मध्यमं तथा ॥ ४५ ॥

अथोच्यते प्रतीशुद्धगान्धाराधः प्रजायते ।
शुद्धगान्धार इत्येव वामपार्श्वे यथाक्रमम् ॥ ४६ ॥

दक्षिणे प्रतिशुद्धाख्यो धैवतश्च निषादकः ।
तदधः शुद्धनैषादो वामपार्श्वे यथाक्रमम् ।
पूर्ववत्प्रस्तरेच्चक्रं द्वितीयमपि कोविदः ॥ ४७ ॥

इति द्वितीयं चक्रम् ।

अथ तृतीयचक्रलक्षणम्—

अथ षट्श्रुतिकाकल्योरप्रस्तारतया तथा ।
वामस्थितं समुच्चार्य पञ्चमं मध्यमं तथा ॥ ४८ ॥

प्रतिसाधारणमधः शुद्धगान्धारतो विदुः ।
यथास्वरं वामपार्श्वे लेखनीयं विचक्षणैः ॥ ४९ ॥

दक्षिणे प्रतिशुद्धाख्यो धैवतश्च निषादकः ।
तदधः शुद्धनैषादो वामपार्श्वे यथाक्रमम् ।
एवं तृतीयचक्रं च विलिखेद्गीतकोविदः ॥ ५० ॥

इति तृतीयं चक्रम् ।

अथ चतुर्थचक्रलक्षणम्—

प्रतिसाधारणस्याधः साधारणमथो लिखेत् ।
यथास्वरं वामपार्श्वे लेखनीयं विचक्षणैः ॥ ५१ ॥

दक्षिणे प्रतिशुद्धाख्यो धैवतोऽथ निषादकः ।
एवमादि यथापूर्वं प्रस्तारयति बुद्धिमान् ॥ ५२ ॥

इति चतुर्थं चक्रम् ।

अथ पञ्चमचक्रलक्षणम्—

साधारणाख्यगान्धारस्याधः प्रत्यन्तरः स्मृतः ।
वामपार्श्वे लेखनीयं क्रमादेव यथास्वरम् ॥ ५३ ॥

दक्षिणे प्रतिशुद्धाख्यो धैवतोऽथ निषादकः ।
एवं प्रस्तारयेद्विद्वान्गीताचार्यो विचक्षणः ॥ ५४ ॥

इति पञ्चमं चक्रम् ।

अथ षष्ठचक्रलक्षणम्—

प्रत्यन्तराख्यगान्धारादधोऽन्तरमथालिखेत् ।
वामपार्श्वे लेखनीयं क्रमादपि यथास्वरम् ॥ ५५ ॥

दक्षिणे प्रतिशुद्धाख्यो धैवतोऽथ निषादकः ।
इत्येवं षष्ठचक्रं च पूर्ववत्प्रस्तरेत्सुधीः ।
अन्तराह्वयगान्धारात्प्रस्तारो न तु संभवेत् ॥ ५६ ॥

इति षष्ठं चक्रम् ।

वामस्थप्रतिशुद्धाख्यरिषभाज्जायते ह्यधः ।
शुद्धर्षभस्तथा दक्षे प्रतिशुद्धाह्वय त्रिकम् ॥ ५७ ॥

गान्धारो धैवतश्चाथ निषादो लिख्यते क्रमात् ।
एवमादि यथापूर्वं प्रस्तारयति कोविदः ॥ ५८ ॥

अखण्डप्रस्तारलक्षणम्—

षड्जस्वरश्च प्रथमो द्वितीयो रिषभस्तथा ।
गान्धारश्च तृतीयोऽथ चतुर्थो मध्यमस्तथा ॥ ५९ ॥

पञ्चमः पञ्चमश्चैव धैवतः षष्ठ एव च ।
निषादः सप्तमश्चैवेत्येते तु स्वरसंज्ञकाः ॥ ६० ॥

एकः षड्जस्य भेदः स्याद्द्विभेदो रिषभस्तथा ।
गान्धारश्च चतुर्भेदो मध्यमस्त्वष्टभेदकः ॥ ६१ ॥

पञ्चमः षोडशभिदो द्वात्रिंशद्भिच्च धैवतः ।
निषादजनिता भेदाश्चतुःषष्टिमिताः स्मृताः ॥ ६२ ॥

ऐकविध्यं तु षड्जस्य स्पष्टमेव विवेकिनाम् ।
जायते रिषभस्याधः षड्जस्वर इतीरितम् ॥ ६३ ॥

वामपार्श्वे पुनः षड्जः षड्जान्तः पूर्ण एव च ।
रिषभस्येति भेदौ द्वौ जायेते शास्त्रसंमतौ ॥ ६४ ॥

3

गान्धाराधस्तु लिख्येत रिषभस्वर एव च ।
वामपार्श्वे लेखनीयः षड्जस्वर इतीरितम् ॥ ६५ ॥

रिषभाज्जायते षड्जस्तद्वामे रिषभस्तथा ।
पुनश्च रिषभाज्जातस्तदधः षड्ज एव च ॥ ६६ ॥

वामपार्श्वे पुनः षड्जो दक्षिणे षड्ज एव सः ।
षड्जान्तमित्थं संपूर्णं गान्धारस्य चतुष्टयम् ॥ ६७ ॥

मध्यमे पञ्चमे चैव धैवते च निषादके ।
पूर्वप्रस्तारजात्यानि लिख्यन्ते गीतकोविदैः ॥ ६८ ॥

अङ्कश्रेणिलक्षणम्—

अङ्कश्रेण्यश्च लिख्यन्ते सोपानसममेव च ।
क्रमात्तत्रोपरि च षड्जाद्येकोत्तरवृद्धितः ॥ ६९ ॥
अन्त्योपान्त्यतृतीयं च चतुर्थं पञ्चमं तथा ।
षष्ठं सप्तमभावं चेत्येतान्संख्यायुताल्ँ लिखेत् ।
निषादान्तं भवेद्भावस्तत्परं नास्ति भावकः ॥ ७० ॥

उद्दिष्टलक्षणम्—

उद्दिष्टभेदात्षडजस्य संख्या नास्तीति तत्परम् ।
रिषभस्य द्विकं कोष्ठमेककोष्ठं च भुक्तकम् ॥ ७१ ॥

गान्धारस्य त्रयः कोष्ठा एककोष्ठं च भुक्तकम् ।
मध्यमस्य चतुःकोष्ठं तदेकं भुक्तमुच्यते ॥ ७२ ॥

पञ्चमं पञ्चकोष्ठं च तदेकं भुक्तमुच्यते ।
निषादे सप्तकोष्ठं च तदेकं भुक्तमुच्यते ॥ ७३ ॥

एवंप्रकारं कोष्ठानां संख्यामुद्धृत्य लेखयेत् ।
तत्संख्यामेकतः कृत्वा वर्जयेदादिसंख्यया ॥ ७४ ॥

यदीच्छेत्पञ्चमं भेदं द्वात्रिंशद्भेदशालिनः ।
उच्यते तत्प्रकारस्तु द्वात्रिंशतिषु पञ्चकम् ॥ ६५ ॥

हित्वा शेषं गुणित्वाऽथ सप्तविंशतिभेदतः ।
अन्ते कोष्ठे षोडशकमुपान्ते चाष्टकं तथा ॥ ७६ ॥

चतुर्थे च द्वयं चैव पञ्चमे चैकमेव च ।
अन्त्योपान्त्येषु गान्धारं तृतीयं वर्जयेत्ततः ॥ ७७ ॥

चतुर्थे पञ्चमे चैव पुनर्गान्धारमीरितम् ।
एवंप्रकारं सर्वेषु तदन्ते नष्टलक्षणम् ॥ ७८ ॥

खण्डप्रस्तारलक्षणम्—

एकयोगो द्वियोगस्त्रियोगोऽन्यश्चतुरादिकः ।
पञ्चयोगोऽथ षड्योगः सप्तयोग इति क्रमात् ॥ ७९ ॥

आरोहाद्यवरोहान्तः प्रस्तारे खण्ड उच्यते ।
एकयोगः स आरोहावरोहक्रमवर्जितः ॥ ८० ॥

द्वियोगे लिख्यते षड्जः प्रस्तारे रिषभादधः ।
वामे च रिषभः प्रोक्तो द्वौ भेदावत्र कीर्तितौ ॥ ८१ ॥

त्रियोगे रिषभात्षड्ज लेख्यमाहुर्मनीषिणः ।
वामे च रिषभः प्रोक्तो दक्षिणे तु यथोपरि ॥ ७२ ॥

विलिखन्त्यथ गान्धाराद्रिषभस्वरमेव हि ।
वामे गान्धारषड्जौ च गान्धारात्षड्जमेव च ॥ ८३ ॥

वामे लिखन्ति गान्धारं दक्षिणे च यथोपरि ।
रिषभादथ लेख्यः स्यात्षड्जाख्यस्वर एव तु ॥ ८४ ॥

वामपार्श्वे लेखनीयो गान्धारो रिषभस्तथा ।
गान्धाराद्रिषभश्चैव वामे गान्धार एव च ।
दक्षिणे षड्ज इत्येवं भेदाः षट् च प्रकीर्तिताः ॥ ८५॥

चतुर्योगे च षड्जाख्यो रिषभाल्लिख्यते स्वरः ।
वामे च रिषभः प्रोक्तो दक्षिणे तु यथोपरि ॥ ८६ ॥

गान्धाराद्रिषभः प्रोक्तो वामे गान्धारषड्जकौ ।
दक्षिणे मध्यमोऽथ स्याद्गान्धारात्षड्ज एव च ॥ ८७ ॥

वामे गान्धार इत्युक्तो दक्षिणे तु यथोपरि ।
स्वरः षड्जाभिधानस्तु लिख्यते रिषभादधः ॥ ८८ ॥

वामे गान्धाररिषभौ दक्षिणे तु यथोपरि ।
गान्धाराद्रिषभः प्रोक्तो वामे गान्धार एव च ॥ ८९ ॥

स्वरद्वयं लेखनीयं यथोपरि च दक्षिणे ।
मध्यमादथ गान्धारो वामे मध्यम एव च ॥ ९० ॥

तद्वामे रिषभः षड्जो रिषभात्षड्ज एव च ।
वामपार्श्वे च रिषभो दक्षिणे तु यथोपरि ॥ ९१ ॥

मध्यमाद्रिषभः प्रोक्तो वामे मध्यमषड्जकौ ।
दक्षिणे चैव गान्धारः षड्जः स्यान्मध्यमादधः ॥ ९२ ॥

वामे च मध्यमः प्रोक्तो दक्षिणे तु यथोपरि ।
रिषभात्प्रोच्यते षड्जो वामपार्श्वे च मध्यमः ॥ ९३ ॥

तद्वामे रिषभश्चैव दक्षिणे तु यथोपरि ।
मध्यमाद्रिषभः प्रोक्तो वामपार्श्वे च मध्यमः ॥ ९४ ॥

दक्षिणे षड्जगान्धारौ गान्धाराद्रिषभस्तथा ।
वामे मध्यमगान्धारौ तद्वामे षड्ज एव च ॥ ९५ ॥

गान्धाराल्लिख्यते षड्जो वामे गान्धार एव च ।
मध्यमो रिषभश्चेति दक्षिणे तु यथोपरि ॥ ९६ ॥

गान्धारो मध्यमाधः स्याद्वामे मध्यमषड्जकौ ।
दक्षिणे रिषभः प्रोक्तो मध्यमादथ षड्जकः ॥ ९७ ॥

वामभागे मध्यमः स्याद्दक्षिणे तु यथोपरि ।
गान्धारादथ षड्जः स्याद्वामपार्श्वे च मध्यमः ॥ ९८ ॥

तद्वामपार्श्वे गान्धारो दक्षिणे तु यथोपरि ।
मध्यमादथ गान्धारो वामपार्श्वे तु मध्यमः ॥ ९९ ॥

दक्षिणे षड्जरिषभौ षड्जश्च रिषभादधः ।
वामे मध्यमगान्धारौ तद्वामे रिषभस्तथा ॥ १०० ॥

गान्धाराद्रिषभः प्रोक्तो वामे गान्धार इष्यते ।
दक्षिणे मध्यमः षड्जो यथोपरिविधानतः ॥ १०१ ॥

मध्यमादथ गान्धारस्तद्वामे मध्यमस्तथा ।
तद्वामे रिषभः प्रोक्तो दक्षिणे तु यथोपरि ॥ १०२ ॥

मध्यमाद्रिषभश्चैव वामपार्श्वे तु मध्यमः ।
दक्षिणे लेखनीयौ च यथोपरि तथा स्वरौ ॥ १०३ ॥

गान्धारादथ लेख्यः स्यादधस्तु रिषभस्वरः ।
वामे मध्यमगान्धारौ दक्षिणे तु यथोपरि ॥ १०४ ॥

मध्यमादथ गान्धारो लेख्यो वामे तु मध्यमः ।
दक्षिणे च स्वरौ लेख्यौ यथोपरिविधानतः ।
भेदाः प्रस्तार एवं स्युश्चतुर्विंशतिसंख्यकाः ॥ १०५ ॥

सप्ताद्येकान्तकोष्ठानामधोऽधः सप्त पङ्क्तयः ।
तास्वाद्यायामाद्यकोष्ठे लिखेदेकं परेषु खम् ॥ १०६ ॥

वेद्यभेदस्वरमितान्न्यस्येत्तेष्वेव लोष्टकान् ।
प्राक्पङ्क्त्यन्ताङ्कसंयोगमूर्ध्वाधःस्थितपङ्क्तिषु ॥ १०७ ॥

शून्यादधो लिखेदेकं तं चाधोऽधः स्वकोष्ठकात् ।
कोष्ठसंख्यागुणं न्यस्येत्खण्डमेरुरयं मतः ॥ १०८ ॥

श्रुतिजन्यस्वरलक्षणम्—

तीव्राख्यादिश्रुतिभ्यश्च स्वरास्त्रिंशदिहोदिताः ।
ते च गान्धर्वगानैकयोग्या वेद्यास्त्वया शिवे ॥ १ ॥

नरगाने सलक्ष्याणि लक्षणानि ब्रुवेऽधुना ।
तीव्रादिका याः श्रुतयः क्षोभिण्यन्ताः प्रकीर्तिताः ॥ २ ॥

विहाय मार्जनीं तत्र क्षोभिणीं च श्रुतिं तथा ।
मिलनादेकयैकस्या गृहद्वादशकं भवेत् ॥ ३ ॥

प्रथमा च द्वितीया च मिलिते प्रथमं गृहम् ।
तृतीया च चतुर्थी च द्वितीयं गृहमेव च ।
इत्येवं द्वन्द्वमिलनाद् गृहद्वादशकं विदुः ॥ ४ ॥

परा नाम्नाऽथ पुंनादः श्रुतिः स्त्रीनाद एव च ।
उभयोरपि संयोगात्स्वरो जन्यः स उत्तमः ॥ ५ ॥

तत्तच्छ्रुतिभवं प्राहुः स्वरषोडशकं बुधाः ।
स्वराः सप्त प्रकृतयो विकृता नव कीर्तिताः ॥ ६ ॥

षोडशानां स्वराणां च नामानि शृणु पार्वति ।
सोपाने प्रथमे जातः शुद्धो रिषभ इष्यते ॥ ७ ॥

द्वितीयसोपानगतौ शुद्धगान्धार इत्ययम् ।
चतुःश्रुती रिषभ इत्येतौ द्वौ परिकीर्तितौ ॥ ८ ॥

तृतीयसोपानजातौ षट्श्रुती रिषभस्तथा ।
साधारणश्च गान्धार इति द्वौ कीर्तितावुभे ॥ ९ ॥

गान्धारोऽन्तरसंज्ञस्तु तुर्यं सोपानमास्थितः ।
सोपाने पञ्चमे जातः शुद्धमध्यम इष्यते ॥ १० ॥

षष्ठसोपानजनितः प्रतिमध्यमनामकः ।
सोपानात्सप्तमाज्जातः स्वरः पञ्चमनामभाक् ॥ ११ ॥

श्रुतेराधारषड्जस्य पञ्चमः सहकार्ययम् ।
सोपानादष्टमाज्जातः शुद्धो धैवत उच्यते ॥ १२ ॥

सोपाने नवमे जातौ चतुःश्रुतिकधैवतः ।
शुद्धो निषाद इति च द्वौ स्वरौ समुदीरितौ ॥ १३ ॥

सोपानाद्दशमाज्जातौ निषादः कैशिकस्तथा ।
धैवतः षट्श्रुतिश्चेति द्वौ स्वरौ परिकीर्तितौ ॥ १४ ॥

एकादशे तु सोपाने काकलिस्वरसंभवः ।
सोपाने द्वादशे चैव षड्जस्वर उदाहृतः ॥ १५ ॥

तेषां प्रस्तारतो जाता भेदा द्वासप्ततिः क्रमात् ।
ख्यायन्ते मेलकर्तारस्ते द्वासप्ततिसंख्यकाः ॥ १६ ॥

मेलप्रस्तारलक्षणम्—

[1]सप्त स्वराश्च शुद्धाः स्युर्निषादाधस्तु[2] कैशिकी ।
लिख्यन्ते वामपार्श्वे च यथाक्रममथ स्वराः ॥ १ ॥

[3]कैशिकाल्लिख्यतेऽधस्तात्काकलिस्वर एव च ।
वामपार्श्वे च लिख्यन्ते यथाक्रममथ स्वराः ॥ २ ॥

[4]चतुःश्रुतिर्धैवतोऽथ लिख्यते धैवतादधः ।
दक्षिणे कैशिकीं चैव वामपार्श्वे यथाक्रमम् ॥ ३ ॥

[5]लिख्यते कैशिकाधश्च काकलिस्वर एव हि ।
वामपार्श्वे लेखनीया यथाक्रममथ स्वराः ॥ ४ ॥

[6]चतुःश्रुतेर्धैवतात्तु षट्श्रुतिं धैवत लिखेत् ।
दक्षिणे काकलीं चैव वामपार्श्वे यथाक्रमम् ॥ ५ ॥

[7]गान्धाराल्लिख्यतेऽधश्च साधारण इति स्वरः ।
दक्षिणे च क्रमः शुद्धो वामपार्श्वे यथाक्रमम् ॥ ६ ॥

[8]निषादादथ लिख्येत कैशिकस्वर एव च ।
वामपार्श्वे लेखनीयाः स्वराः सर्वे यथोपरि ॥ ७ ॥

[9]कैशिकादथ लिख्येत काकलिस्वर एव च ।
वामपार्श्वे च लिख्यन्ते यथोपरि तथा स्वराः ॥ ८ ॥

[10]धैवतादथ लिख्येत चतुःश्रुतिकधैवतः ।
दक्षिणे कैशिकी चैव वामपार्श्वे यथोपरि ॥ ९ ॥

[11] कैशिकादथ लिख्येत काकलिस्वर एव च ।
वामपार्श्वे लेखनीयाः स्वराः सर्वे यथाक्रमम् ॥ १० ॥

[12]चतुःश्रुतेर्धैवतात्तु षट्श्रुतिं धैवतं लिखेत् ।
दक्षिणे काकलीं चैव वामपार्श्वे यथाक्रमम् ॥ ११ ॥

[13]साधारणाधो लिख्येत गान्धारोऽन्तर एव च ।
दक्षिणे च क्रमाच्छुद्धा वामपार्श्वे यथोपरि ॥ १२ ॥

[14]निषादादथ लिख्येत कैशिकस्वर एव च ।
वामपार्श्वे लेखनीयाः स्वरा अथ यथाक्रमम् ॥ १३ ॥

[15] कैशिकादथ लिख्येत काकलिस्वर एव च ।
वामपार्श्वे तु लेख्याः स्युः स्वरा अथ यथोपरि ॥ १४ ॥

[16]धैवताल्लिख्यते शुद्धाच्छतुःश्रुतिकधैवतः ।
दक्षिणे कैशिकश्चैव वामपार्श्वे यथाक्रमम् ॥ १५ ॥

[17]कैशिकादथ लिख्येत काकलिस्वर एव च ।
वामपार्श्वे तु लिख्यन्ते यथोपरि तथा स्वराः ॥ १६ ॥

[18]चतुःश्रुतेर्धैवतात्तु षट्श्रुतिं धैवतं लिखेत् ।
दक्षिणे काकलीं चैव वामपार्श्वे यथाक्रमम् ॥ १७ ॥

[19]रिषभाल्लिख्यते शुद्धाद्रिषभस्तु चतुःश्रुतिः ।
साधारणो दक्षिणेऽथ स्वराः शुद्धाः प्रकीर्तिताः ॥ १८ ॥

[20]निषादादथ लिख्येत कैशिकस्वर एव च ।
वामपार्श्वे लेखनीयाः स्वरा अथ यथाक्रमम् ॥ १९ ॥

[21] कैशिकादथ लिख्येत काकलिस्वर एव च ।
वामपार्श्वे लेखनीया यथाक्रममथ स्वराः ॥ २० ॥

[22] धैवतादथ लिख्येत चतुःश्रुतिकधैवतः ।
दक्षिणे कैशिकश्चैव वामपार्श्वे यथाक्रमम् ॥ २१ ॥

[23] कैशिकादथ लिख्येत काकलिस्वर एव च
वामपार्श्वे लेखनीयाः स्वरा अथ यथाक्रमम् ॥ २२ ॥

[24] चतुःश्रुतिधैवताधः षट्श्रुतिं धैवतं लिखेत् ।
दक्षिणे काकलिं चैव वामपार्श्वे यथाक्रमम् ॥ २३ ॥

[25] साधारणाधो लिख्येत स्वरस्त्वन्तर एव च ।
दक्षिणे च स्वराः शुद्धा वामपार्श्वे यथोपरि ॥ २४ ॥

[26] निषादादथ लिख्येत कैशिकस्वर एव च ।
वामपार्श्वे लेखनीयाः स्वरा अथ यथाक्रमम् ॥ २५ ॥

[27] कैशिकादथ लिख्येत काकलीस्वर एव च ।
वामपार्श्वे लेखनीयाः स्वरा अथ यथाक्रमम् ॥ २६ ॥

[28] धैवतादथ लिख्येत चतुःश्रुतिकधैवतः ।
दक्षिणे कैशिकश्चैव वामपार्श्वे यथाक्रमम् ॥ २७ ॥

[29]कैशिकादथ लिख्येत काकलिस्वर एव च ।
वामपार्श्वे लेखनीयाः स्वरा अथ यथाक्रमम् ॥ २८ ॥

[30]चतुःश्रुतिधैवताधः षट्श्रुतिं धैवत लिखेत् ।
दक्षिणे काकलीं चैव वामपार्श्वे यथाक्रमम् ॥ २९ ॥

[31]चतुःश्रुत्यृषभाधोऽथ षट्श्रुती रिषभः स्मृतः ।
दक्षिणे चान्तरः शुद्धास्तथा वामे यथाक्रमम् ॥ ३० ॥

[32]निषादादथ लिख्येत कैशिकस्वर एव च ।
वामपार्श्वे लेखनीयाः स्वरा अथ यथाक्रमम् ॥ ३१ ॥

[33]कैशिकादथ लिख्येत काकलिस्वर एव च ।
वामपार्श्वे लेखनीयाः स्वरा अथ यथाक्रमम् ॥ ३२ ॥

[34]धैवतादथ लिख्येत चतुःश्रुतिकधैवतः ।
दक्षिणे कैशिकं चैव वामपार्श्वे यथाक्रमम् ॥ ३३ ॥

[35]कशिकादथ लिख्येत काकलिस्वर एव च ।
वामपार्श्वे लेखनीया यथोपरि तथा स्वराः ॥ ३४ ॥

[36]चतुःश्रुतिधैवताधः षट्श्रुतिं धैवतं लिखेत् ।
दक्षिणे काकलीं चैव वामपार्श्वे यथाक्रमम् ॥ ३५ ॥

इमे भेदास्तु षट्त्रिंशच्छुद्धमध्यमसंयुताः ।
एतत्प्रस्तारजातीनां प्रतिमध्यमयोगतः ॥ ३६ ॥

लेखनेऽन्ये च षट्त्रिंशद्भेदा देवि भवन्ति हि ।
आहत्यैते जातिभेदा द्वासप्ततिरुदाहृताः ॥ ३७ ॥

ये तु प्रसिद्धमेलाधिकारिणश्च द्विसप्ततिः ।
तेषां नामानि वक्ष्यन्ते क्रमशो लक्षणानि च ॥ ३८ ॥

अथ शुद्धमध्यममेलकर्तॄणां नामान्युच्यन्ते—

कनकाङ्गी च रत्नाङ्गी गानमूर्तिर्वनस्पतिः ।
नाम्ना मानवती तानरूपी सेनावती तथा ॥ १ ॥

हनुमत्तोडिविख्याता धेनुकेति प्रकीर्तिता ।
नाटकप्रिय इत्युक्तः कोकिलप्रियनामकः ॥ २ ॥

तथा रूपवती चैव गायकप्रियनामकः ।
वकुलाभरणं चैव मायामालवगौलकः ॥ ३ ॥

चक्रवाक इति प्रोक्तः सूर्यकान्त इति स्मृतः ।
हाटकाम्बर्यभिख्या च झङ्कारध्वनिनामकः ॥ ४ ॥

नरभैरविनाम्नी च कीरवाणी ततः परम् ।
खरहरप्रियश्चैव तथा गौरीमनोहरी ॥ ५ ॥

वरुणप्रियनामा च माररञ्जनिका तथा ।
चारुकेशीति विख्याता सरसाङ्गीति कीर्तिता ॥ ६ ॥

हरिकाम्भोजिका धीरशंकराभरणं तथा ।
नागानन्दनिका यागप्रियाऽथो रागवर्धनी ॥ ७ ॥

गाङ्गेयभूषणी नाम्ना वागधीश्वरिनामिका ।
विख्याता शूलिनीनाम्ना चलनाटः प्रकीर्तितः ॥ ८ ॥

अथ प्रतिमध्यममेलकर्तॄणां नामानि—

सालगो नाम विख्यातो जलार्णव इतीरितः ।
ख्याता झालवरालीति नवनीतमिति स्मृतम् ॥ १ ॥

पावनी लोकविख्याता रघुप्रिय इतीरितः ।
गवाम्भोधिरिति ख्यातो भवप्रिय इति श्रुतः ॥ २ ॥

शुभपन्तुवराली च तथा षड्विधमार्गणी ।
सुवर्णाङ्गीति विख्याता दिव्यमण्यभिधा तथा ॥ ३ ॥

धवलाम्बरिनाम्नी च नामनारायणी ततः ।
कामवर्धन्यभिख्याता रामप्रिय इति स्मृतः ॥ ४ ॥

गमनश्रम इत्युक्तः श्रुता विश्वंभरीति च ।
श्यामलाङ्गीति विख्याता षण्मुखप्रिय एव च ॥ ५ ॥

सिंहेन्द्रमध्यमा चैव हेमवत्यभिधा ततः ।
ख्याता धर्मवतीनाम्ना स्मृता नीतिमतीति च ॥ ६ ॥

कान्तामणिरिति प्रोक्ता रिषभप्रियनामकः ।
लताङ्गीति प्रसिद्धा च वाचस्पतिरितीरितः ॥ ७ ॥

विख्याता मेचकल्याणी ततश्चित्राम्बरी पुनः ।
सुचरित्र इति ख्यातस्तथा ज्योतिःस्वरूपिणी ॥ ८ ॥

धातुवर्धनिविख्याता नासिकाभूषणी तथा ।
ततः कोसल इत्युक्तो रसिकप्रियनामकः ॥ ९ ॥

१. कनकाम्बरीमेललक्षणम्—

शुद्धसप्तस्वरवती पूर्णारोहावरोहिका ।
षड्जग्रहांशकन्यासा मुख्यमेलाधिकारिका ।
वायुबीजाक्षरा सा च कनकाङ्गीति कथ्यते ॥ १ ॥

२. फेनद्युतिमेललक्षणम्—

द्वितीया चैव रत्नाङ्गी कैशिकस्वरसंयुता ।
तथा चेतरशुद्धा स्यात्पूर्णारोहावरोहिका ।
षड्जग्रहांशकन्यासा चाग्निबीजा प्रमोदकृत् ॥ २ ॥

३. सामवरालीमेललक्षणम्—

सकाकली गानमूर्तिस्तथा चेतरशुद्धका ।
पूर्णारोहावरोहा च षड्जन्यासांशकग्रहा ।
भूबीजा भाग्यफलदा तथा मेलस्तृतीयकः ॥ ३ ॥

४. भानुमतीमेललक्षणम्—

चतुःश्रुतिधैवतेन कैशिक्या च वनस्पतिः ।
तथैवेतरशुद्धश्च पूर्णारोहावरोहकः ॥ ४ ॥

षड्जग्रहांशकन्यासो जलबीजाक्षरः शुभः ।
तथैव पोषणकरस्तथा मेलश्चतुर्थकः ॥ ५ ॥

५. मनोरञ्जनीमेललक्षणम्—

चतुःश्रुतिधैवतेन काकल्येतरशुद्धका ।
पूर्णारोहावरोहा च षड्जन्यासांशकग्रहा ॥ ६ ॥

आकाशबीजसंयुक्ता शिवदैवा फलप्रदा ।
मानवत्युदिता सद्भिस्तथा मेलश्च पञ्चमः ॥ ७ ॥

६. तनुकीर्त्तिमेललक्षणम्—

षट्श्रुतियुग्धैवतेन काकल्येतरशुद्धकः ।
पूर्णारोहावरोहश्च षड्जन्यासग्रहांशकः ॥ ८ ॥

4

वायुबीजाक्षरयुतः श्रोत्रमित्रैः स्वरैर्लसन् ।
तानरूपी महारागः षष्ठोऽयमधिकारकः ॥ ९ ॥

७. सेनाग्रणीमेललक्षणम्—

ससाधारणगान्धारोऽन्यशुद्धस्वरान्वितः ।
पूर्णारोहावरोहश्च षड्जन्यासांशकग्रहः ॥ १० ॥

वाय्वग्निबीजयुक्तश्च भीतियुक्तस्वरः शुभः ।
सेनापतिस्तु पुंरागः सप्तमोऽप्यधिकारकः ॥ ११ ॥

८. तोडिमेललक्षणम्—

ससाधारणगान्धारा कैशिकीसमलंकृता ।
तथैवेतरशुद्धा च पूर्णारोहावरोहिका ॥ १२ ॥

षड्जग्रहांशकन्यासा संपद्भूबीजसंयुता ।
हनुमत्तोडिरित्येव चाष्टमोऽप्यधिकारकः ॥ १३ ॥

९. भिन्नषड्जमेललक्षणम्—

ससाधारणगान्धारा काकलीस्वरसंयुता ।
तथा चेतरशुद्धा च पूर्णारोहावरोहिका ॥ १४ ॥

पुष्टिकृज्ज्वलबीजार्णा धेनुका धर्मरूपभृत् ।
नवमो ह्यधिकारोऽयं गीतविद्भिः प्रकीर्त्यते ॥ १५ ॥

१०. नटाभरणमेललक्षणम्—

ससाधारणगान्धारः सचतुःश्रुतिधैवतः ।
सकैशिकनिषादश्चेतरशुद्धस्वरस्तथा ॥ १६ ॥

पूर्णारोहावरोहश्च षड्जन्यासांशकग्रहः ।
वाग्वाकाशाक्षरेडघश्च शोकभीतिस्वरैर्युतः ।
नाटकप्रियरागोऽयं दशमो ह्यधिकारकः ॥ १७ ॥

११. कोकिलारवमेललक्षणम्—

ससाधारणगान्धारः सचतुःश्रुतिधैवतः ।
सकाकलिनिषादश्चेतरशुद्धस्वरात्मकः ॥ १८ ॥

पूर्णारोहावरोहश्च षड्जन्यासांशकग्रहः ।
भूवायुबीजवर्णश्च शुभकृद्भिः स्वरैर्युतः ।
कोकिलप्रिय इत्येकादशोऽयमधिकारकः ॥ १९ ॥

१२. रौप्यनगमेललक्षणम्—

ससाधारणगान्धारा सषट्श्रुतिकधैवता ।
सकाकलिनिषादा च पूर्णारोहावरोहिका ॥ २० ॥

षड्जग्रहांशकन्यासा चाग्निभूबीजसंयुता ।
संपदानन्दशुभकृत्स्वरयुक्ता विशेषतः ।
रूपावतीति कथिता द्वादशो ह्यधिकारकः ॥ २१ ॥

१३. हेज्जुज्जिमेललक्षणम्—

युक्तोऽन्तरेण गान्धारेणेतरस्वरशुद्धकः ।
पूर्णारोहावरोहश्च षड्जन्यासांशकग्रहः ॥ २२ ॥

वायुभूबीजसंयुक्तः शुभकर्तृस्वरेडितः ।
गायकप्रिय इत्येव ह्यधिकारस्त्रयोदशः ॥ २३ ॥

१४. वसन्तभैरवीमेललक्षणम्—

कैशिक्यन्तरगान्धारसहितेतरशुद्धका ।
पूर्णारोहावरोहा च षड्जन्यासांशकग्रहा ॥ २४ ॥

संजीवनकरी नित्यं जलबीजाक्षरैर्युता ।
वकुलाभरणाख्या चाप्यधिकारश्चतुर्दशः ॥ २५ ॥

१५. मालवगौलमेललक्षणम्—

काकल्यन्तरगान्धारसहितश्चान्यशुद्धकः ।
पूर्णारोहावरोहश्च षड्जन्यासांशकग्रहः ॥ २६ ॥

वाय्वाकाशाक्षरेड्यश्च भीतिस्वरयुतः शुभः ।
अधिकारः पञ्चदशो मायामालवगौलकः ॥ २७ ॥

१६. वेगवाहिनीमेललक्षणम्—

अन्तर्गान्धारसहितश्चतुःश्रुतिकधैवतः ।
सकैशिकनिषादश्चेतरशुद्धस्तथैव च ॥ २८ ॥

पूर्णारोहावरोहश्च षड्जन्यासांशकग्रहः ।
वायुबीजाक्षरवरः शोकस्वरयुतः शुभः ।
चक्रवाक इति ख्यातः षोडशो ह्यधिकारकः ॥ २९ ॥

१७. सुप्रदीपमेललक्षणम्—

अन्तर्गान्धारसहितः सचतुःश्रुतिधैवतः ।
काकलीतरशुद्धश्च पूर्णारोहावरोहकः ॥ ३० ॥

षड्जग्रहन्यासयुतश्चाग्निभूबीजसंगतः ।
सूर्यकान्तः सप्तदशोऽधिकारः कीर्तितो बुधैः ॥ ३१ ॥

१८. शुद्धमालवीमेललक्षणम्—

अन्तर्गान्धारसहिता सषट्श्रुतिकधैवता ।
सकाकलिनिषादा चेतरशुद्धा तथैव च ॥ ३२ ॥

पूर्णारोहावरोहा च षड्जन्यासांशकग्रहा ।
भूबीजाक्षरसंयुक्ता संपदानन्दकारिणी ।
हाटकाम्बरिकेत्यष्टादशोऽयमधिकारकः ॥ ३३ ॥

१९. झङ्कारभ्रमरीमेललक्षणम्—

ससाधारणगान्धारश्चतुःश्रुत्यृषभान्वितः ।
तथा चेतरशुद्धः संपूर्णारोहावरोहकः ॥ ३४ ॥

षड्जग्रहांशकन्यासो जलाकाशाक्षरैर्युतः ।
संजीवनकरो नित्यं झङ्कारध्वनिरीरितः ।
अधिकार इति प्रोक्तो बुधैरेकोनविंशकः ॥ ३५ ॥

२०. भैरवीमेललक्षणम्—

ससाधारणगान्धारा चतुःश्रुत्यृषभान्विता ।
सकैशिकनिषादा चेतरशुद्धात्मिका मता ॥ ३६ ॥

पूर्णारोहावरोहा च षड्जन्यासांशकग्रहा ।
आकाशबीजसंयुक्ता भैरवस्वरयोगिनी ।
नरभैरविनाम्नीयं विंशोऽयमधिकारकः ॥ ३७ ॥

२१. किरणावलिमेललक्षणम्—

चतुःश्रुत्यृषभोपेता काकलिस्वरसंयुता ।
ससाधारणगान्धारा शुद्धैरन्यैः समन्विता ॥ ३८ ॥

पूर्णारोहावरोहा च षड्जन्यासांशकग्रहा ।
वायुज्वलनबीजीया शोकस्वरसमन्विता ।
कीरवाणीति विख्याता ह्येकविंशोऽधिकारकः ॥ ३९ ॥

२२. श्रीरागमेललक्षणम्—

चतुःश्रुत्यृषभा साधारणगान्धारभूषणा ।
चतुःश्रुतिधैवतयुक्सकैशिकनिषादिनी ॥ ४० ॥

तथैवेतरशुद्धा च पूर्णारोहावरोहिका ।
षड्जन्यासग्रहांशा चाप्यनलस्वरविक्रमा ॥ ४१ ॥

पराक्रमैकफलदः सर्वशत्रुविनाशनः ।
गायकानां प्रियो ह्युक्तो नाम्ना खरहरप्रियः ।
द्वाविंशतितमो मेलः प्रोक्तो गीतिविचक्षणैः ॥ ४२ ॥

२३. वेलावलीमेललक्षणम्—

चतुःश्रुत्यृषभा साधारणगान्धारभूषणा ।
चतुःश्रुतिधैवतयुक्काकलीतरशुद्धभाक् ॥ ४३ ॥

संपूर्णारोहावरोहा षड्जन्यासांशकग्रहा ।
धात्रीजीवनवीजार्णा सुखदाऽऽनन्ददायिनी ।
गौरीमनोहरीत्युक्ता त्रयोविंशोऽधिकारकः ॥ ४४ ॥

२४. वीरवसन्तमेललक्षणम्—

चतुःश्रुत्यृषभः साधारणगान्धारभूषितः ।
षट्श्रुतिधैवतयुतः काकलीतरशुद्धभाक् ॥ ४५ ॥

संपूर्णारोहावरोहः षड्जन्यासग्रहांशकः ।
जलबीजयुतो नित्यं संजीवनकरः शुभः ।
वरुणप्रिय इत्युक्तश्चतुर्विंशोऽधिकारकः ॥ ४६ ॥

२५. शरद्युतीमेललक्षणम्—

चतुःश्रुत्यृषभान्तर्गान्धारेतरविशुद्धिका ।
संपूर्णारोहावरोहा षड्जन्यासग्रहांशका ॥ ४७ ॥

नभोवाय्वक्षरवती शोकस्वरकदम्बयुक् ।
माररञ्जनिका पञ्चविंशोऽयमधिकारकः ॥ ४८ ॥

२६. तरङ्गिणीमेललक्षणम्—

चतुःश्रुत्यृषभान्तर्गान्धारकैशिकराजिता ।
तथा चेतरशुद्धा संपूर्णारोहावरोहिका ॥ ४९ ॥

षड्जन्यासग्रहांशा च वायुबीजाक्षरैर्युता ।
करुणारसशोभाढ्या चारुकेशीति कथ्यते ।
षड्विंशो ह्यधिकारोऽयं गीतशास्त्रज्ञपूजितः ॥ ५० ॥

२७. सुरसेनमेललक्षणम्—

चतुःश्रुत्यृषभान्तर्गान्धारषट्श्रुतिधैवता ।
लसन्तीतरशुद्धा च पूर्णारोहावरोहिका ॥ ५१ ॥

भीतिस्वरकदम्बाढ्या शिखीन्द्रजविभूषिता ।
सरसाङ्गी मनोज्ञेयं सप्तविंशोऽधिकारकः ॥ ५२ ॥

२८. काम्भोजीमेललक्षणम्—

चतुःश्रुत्यृषभान्तर्गान्धारभूषणभूषिता ।
चतुःश्रुतिधैवता च सकैशिकनिषादिका ॥ ५३ ॥

लसन्तीतरशुद्धा च पूर्णारोहावरोहिका ।
षड्जन्यासग्रहांशा च भूमिबीजार्णशोभिता ॥ ५४ ॥

करुणारससंपूर्णा महीसौभाग्यदायिनी ।
हरिकाम्भोजिका ह्यष्टाविंशोऽयमधिकारकः ॥ ५५ ॥

२९. शंकराभरणमेललक्षणम्—

चतुःश्रुत्यृषभान्तर्गान्धारनूपुरसंयुतम् ।
चतुःश्रुतिधैवतकाकलिकाञ्चीविराजितम् ॥ ५६ ॥

शुद्धैरन्यैः स्वरैर्युक्तं पूर्णारोहावरोहकम् ।
षड्जन्यासग्रहांशं च व्योमबीजार्णवन्दितम् ॥ ५७ ॥

रौद्रस्वरयुतं धीरशंकराभरणं शुभम् ।
अधिकारोऽयमेकोनत्रिंश एवमुदीरितः ॥ ५८ ॥

३०. सामन्तमेललक्षणम्—

चतुःश्रुत्यृषभान्तर्गान्धारषट्श्रुतिधैवता ।
सकाकलिनिषादा च पूर्णारोहावरोहिका ॥ ५९ ॥

षड्जग्रहांशकन्यासा व्योमबीजविराजिता ।
भयानकरसैर्युक्ता नागानन्दिनिनामिका ।
अधिकारो महानत्र त्रिंशः संगीतसंमतः ॥ ६० ॥

३१. कलहंसमेललक्षणम्- —

षट्श्रुत्यृषभयुक्ताऽन्तर्गान्धारेतरशुद्धयुक् ।
पूर्णारोहावरोहा च षड्जन्यासग्रहांशका ॥ ६१ ॥

वायुबीजाक्षरवती शान्तस्वरकदम्बिनी ।
यागप्रियेति कथिता ह्यश्वमेधाध्वरेडिता ।
संगीतपण्डितैरेकत्रिंशोऽयमधिकारकः ॥ ६२ ॥

३२. रागचूडामणिमेललक्षणम्—

षट्श्रुत्यृषभयुक्ताऽन्तर्गान्धारा कैशिकीयुता ।
शुभा चेतरशुद्धा संपूर्णारोहावरोहिका ॥ ६३ ॥

षड्जन्यासग्रहांशा च पवनाग्निद्विबीजिनी ।
बीभत्सरससंदोहा रागवर्धनिनामिका ।
संगीतसारवित्पूज्या द्वात्रिंशश्चाधिकारकः ॥ ६४ ॥

३३. गङ्गातरङ्गिणीमेललक्षणम्—

षट्श्रुत्यृषभयुक्तान्तर्गान्धारा काकलीयुता ।
शुभा चेतरशुद्धा संपूर्णारोहावरोहिका ॥ ६५ ॥

षड्जन्यासग्रहांशा च वायुवीजार्णशोभिनी ।
घनैश्वर्यप्रदात्री च कनकान्दोलदायिनी ।
गाङ्गेयभूषणी ह्युक्ता त्रयस्त्रिंशोऽधिकारकः ॥ ६६ ॥

३४. छायानाटमेललक्षणम्—

षट्श्रुत्यृषभयुक्तान्तर्गान्धारमणिभूषणा ।
चतुःश्रुतिधैवतभाक्सकैशिकनिषादिनी ॥ ६७ ॥

शोभिनीतरशुद्धा संपूर्णारोहावरोहिका ।
षड्जन्यासग्रहांशा च वायुवार्बीजमातृका ॥ ६८ ॥

जगन्माता पुटकरी शान्तस्वरकदम्बिनी ।
संगीताख्यसुधासिन्धुवृद्धिकृद् वागधीश्वरी ।
अधिकारश्चतुस्त्रिंशो गीतसारविदीरितः ॥ ६९ ॥

३५. देशाक्षीमेललक्षणम्—

षट्श्रुत्यृषभसान्तर्गान्धारमाल्याधिकारिणी ।
चतुःश्रुतिधैवतेति खड्गखेटकशोभिनी ॥ ७० ॥

सकाकलिनिषादा द्विहंसाम्बुजविलासिनी ।
लसन्तीतरशुद्धा संपूर्णारोहावरोहिका ॥ ७१ ॥

षड्जन्यासग्रहांशादिनाकिनीगणशोभिनी ।
आकाशबीजाट्टहासा रौद्रस्वरकदम्बिनी ॥ ७२ ॥

शूलिनी स्वरशत्रुघ्नी नाम्ना सौभाग्यदायिनी ।
संगीतकोविदैरीड्या पञ्चत्रिंशोऽधिकारकः ॥ ७३ ॥

३६. नाटमेललक्षणम्—

षट्श्रुत्यृषभगान्धारः सषट्श्रुतिकधैवतः ।
सकाकलिनिषादश्चेतरशुद्धस्तथैव च ॥ ७४ ॥

संपूर्णारोहावरोहः षड्जन्यासग्रहांशकः ।
वायुबीजाक्षरयुतः करुणारसशोभितः ।
चलनाट इति प्रोक्तः षट्त्रिंशो ह्यधिकारकः ॥ ७५ ॥

३७. सालवरागमेललक्षणम्—

प्रतिमध्यमसंयुक्तश्चान्यशुद्धात्मकस्तथा ।
संपूर्णारोहावरोहः षड्जन्यासांशकग्रहः ॥ ७६ ॥

वाय्वग्निबीजसंयुक्तः शुभस्वरकदम्बकः ।
नाम्ना सालगरागोऽयं सप्तत्रिंशः प्रकीर्तितः ॥ ७७ ॥

३८. जगन्मोहनमेललक्षणम्—

प्रतिमध्यमकैशिक्यसंयुक्तश्चान्यशुद्धकः ।
संपूर्णारोहावरोहः षड्जन्यासांशकग्रहः ॥ ७८ ॥

भूमिबीजाम्बराढ्यः श्रीसंपद्रत्नाकराह्वयः ।
जलार्णव इति प्रोक्तश्चाष्टत्रिंशोऽधिकारकः ॥ ७९ ॥

३९. वरालिमेललक्षणम्—

प्रतिमध्यमसंयुक्ता काकलीतरशुद्धका ।
संपूर्णारोहावरोहा षड्जन्यासांशकग्रहा ॥ ८० ॥

वायुबीजाक्षरवती जनजीवनकारिणी ।
नाम्ना झालवराल्यूनचत्वारिंशोऽधिकारकः ॥ ८१ ॥

४०. नभोमणिमेललक्षणम्—

प्रतिमध्यमसंयुक्तं सचतुःश्रुतिधैवतम् ।
कैशिकीतरशुद्धं संपूर्णारोहावरोहकम् ॥ ८२ ॥

षड्जन्यासांशकग्रहं व्योमबीजाख्यशिप्यगम् ।
गोपालप्रियमत्यन्तं मृदुस्वरकदम्बकम् ।
नवनीतमिति प्रोक्तं चत्वारिंशोऽधिकारकः ॥ ८३ ॥

४१. प्रभावतीमेललक्षणम्—

प्रतिमध्यमयुक्ता च सचतुःश्रुतिधैवता ।
काकलीतरशुद्धा संपूर्णारोहावरोहिका ॥ ८४ ॥

षड्जग्रहांशकन्यासगङ्गाजलविराजिता ।
वायुबीजाक्षरवती भीतिस्वरकदम्बिनी ।
पावनोनामिका चैकचत्वारिंशोऽधिकारकः ॥ ८५ ॥

४२. रघुलीलमेललक्षणम्—

प्रतिमध्यमयुक्ता च सषट्श्रुतिकधैवता ।
काकलीतरशुद्धा संपूर्णारोहावरोहिका ॥ ८६ ॥

अग्निबीजयुता साध्वी सर्वाभीष्टप्रदायिनी ।
रघुप्रियेति ख्याता द्विचत्वारिंशोऽधिकारकः ॥ ८७ ॥

४३. गीर्वाणमेललक्षणम्—

ससाधारणगान्धारः प्रतिमध्यमशोभितः ।
तथा चेतरशुद्धः संपूर्णारोहावरोहकः ॥ ८८ ॥

षड्जन्यासग्रहांशाख्यत्रिकालक्षीरदायकः ।
भूमिबीजयुतः संपत्सौभाग्यफलपोषकः ।
नाम्ना गवाम्भोधिरिति त्रिचत्वारिंश ईरितः ॥ ८९ ॥

४४. भवानीमेललक्षणम्—

ससाधारणगान्धारप्रतिमध्यमभूषणा ।
कैशिकीतरशुद्धा संपूर्णारोहावरोहिणी ॥ ९० ॥

षड्जग्रहांशकन्यासा शंकरार्धशरीरिणी ।
जलबीजार्णसंयुक्ता जगज्जीवनकारिणी ।
भवप्रियेति च चतुश्चत्वारिंशोऽधिकारकः ॥ ९१ ॥

४५. पन्तुवरालीमेललक्षणम्—

ससाधारणगान्धारप्रतिमध्यमशोभिता ।
काकलीतरशुद्धा संपूर्णारोहावरोहिका ॥ ९२ ॥

षड्जग्रहांशकन्यासा भूम्याकाशाक्षरैर्युता ।
शुभा पन्तुवराली पञ्चचत्वारिंश ईरितः ॥ ९३ ॥

४६. तीव्रवाहिनीमेललक्षणम्—

ससाधारणगान्धारा प्रतिमध्यमसंयुता ।
चतुःश्रुतिधैवतिका कैशिकीतरशुद्धका ॥ ९४ ॥

संपूर्णारोहावरोहा षड्जन्यासग्रहांशका ।
वायुबीजाक्षरवती तपःसिद्धिफलप्रदा ।
षड्विधमार्गणीनाम्ना षट्चत्वारिंश ईरितः ॥ ९५ ॥

४७. सौवीरमेललक्षणम्—

ससाधारणगान्धारप्रतिमध्यमसंयुता ।
चतुःश्रुतिधैवतेड्या काकलीतरशुद्धका ॥ ९६ ॥

संपूर्णारोहावरोहा षड्जन्यासांशकग्रहा ।
भूम्यग्निबीजसंयुक्ता संपद्विक्रमकारिणी ।
सुवर्णाङ्गी शुभा सप्तचत्वारिंशोऽधिकारकः ॥ ९७ ॥

४८. जीवन्तिनीमेललक्षणम्—

ससाधारणगान्धारप्रतिमध्यमशोभिनी ।
षट्श्रुतिधैवतवती काकलीतरशुद्धका ॥ ९८ ॥

संपूर्णारोहावरोहा षड्जन्यासांशकग्रहा ।
भूम्यग्निबीजोल्लसिता संपद्विक्रमकारिणी ।
नाम्ना दिव्यमणिस्त्वष्टचत्वारिंशोऽधिकारकः ॥ ९९ ॥

४९. धवलाङ्गीमेललक्षणम्—

एषा चान्तरगान्धारप्रतिमध्यमशोभिनी ।
तथा चेतरशुद्धा संपूर्णारोहावरोहिका ॥ १०० ॥

षड्जग्रहांशकन्यासा जलबीजाक्षराञ्चिता ।
जगत्संजीवनकरी विख्याता धवलाम्बरी ।
गीतविद्भिः श्रुतैकोनपञ्चाशो ह्यधिकारकः ॥ १०१ ॥

५०. नर्मदमेललक्षणम्—

जगत्यन्तरगान्धारप्रतिमध्यमशोभिनी ।
कैशिकीतरशुद्धा संपूर्णारोहावरोहिका ॥ १०२ ॥

षड्जग्रहांशकन्यासा वाय्वाकाशनिरन्तरा ।
धर्मादिमोक्षफलदा नामनारायणी मता ।
संगीतशास्त्रिभिः पञ्चाशत्तमो ह्यधिकारकः ॥ १०३ ॥

५१. रामक्रियमेललक्षणम्—

मनस्यन्तरगान्धारप्रतिमध्यमजागरा ।
काकलीतरशुद्धा संपूर्णारोहावरोहिका ॥ १०४ ॥

षड्जग्रहांशकन्यासा वायुबीजयुता शुभा ।
कामवर्धनिनाम्ना ह्येकपञ्चाशोऽधिकारकः ॥ १०५ ॥

५२. रमामनोहरीमेललक्षणम्—

उरस्यन्तरगान्धारप्रतिमध्यमभूषणा ।
चतुःश्रुतिधैवताढ्या कैशिकीतरशुद्धका ॥ १०६ ॥

संपूर्णारोहावरोहा षड्जन्यासांशकग्रहा ।
वाय्वग्निबीजताटङ्कशोभिनी भाग्यदायिनी ।
रामप्रियेति कथिता द्विपञ्चाशोऽधिकारकः ॥ १०७ ॥

५३. गमकक्रियमेललक्षणम्—

वक्षस्यन्तरगान्धारप्रतिमध्यमधूर्वहा ।
चतुःश्रुतिधैवतयुक्ताकलीतरशुद्धका ॥ १०८ ॥

संपूर्णारोहावरोहा षड्जन्यासांशकग्रहा ।
भूमिबीजाक्षरवती सदा संपत्करी शुभा ॥ १०९ ॥

लोकानन्दकरी मन्दगामिनी गमनश्रमा ।
कथिता विबुधैरेवं त्रिपञ्चाशोऽधिकारकः ॥ ११० ॥

५४. वैशाखमेललक्षणम्—

जगत्यन्तरगान्धारप्रतिमध्यमसंयुता ।
षट्श्रुतिधैवताढ्या च काकलीतरशुद्धका ॥ १११ ॥

संपूर्णारोहावरोहा षड्जन्यासग्रहांशका ।
जलाग्निबीजसुव्याप्ता सृष्टिस्थितिकरी शुभा ।
विश्वंभरी तु कथिता चतुःपञ्चाश ईरितः ॥ ११२ ॥

५५. शामलमेललक्षणम्—

चतुःश्रुत्यृषभसाधारणगान्धारशोभिनी ।
प्रतिमध्यमसंयुक्तेतरशुद्धात्मिका तथा ॥ ११३ ॥

संपूर्णारोहावरोहा षड्जन्यासांशकग्रहा ।
आकाशवायुबीजोत्था घनस्वरकदम्बिनी ।
शामलाङ्गीति कथिता पञ्चपञ्चाश ईरितः ॥ ११४ ॥

५६. त्रिमूर्तिमेललक्षणम्—

चतुःश्रुत्यृषभसाधारणगान्धारभूषणा ।
प्रतिमध्यमसंनद्धा कैशिकीबर्हिवाहिनी ॥ ११५ ॥

तथा चेतरशुद्धा संपूर्णारोहावरोहिणी ।
षड्जग्रहांशकन्यासा वायुबीजाक्षरा शुभा ॥ ११६ ॥

शृङ्गारस्वरसंयुक्ता देवसेनाफलप्रदा ।
षट्पञ्चाशोऽधिकारश्च नाम्ना स्यात्षण्मुखप्रिया ॥ ११७ ॥

५७. सीमन्तिनीमेललक्षणम्—

चतुःश्रुत्यृषभसाधारणगान्धारविक्रमा ।
प्रतिमध्यमयुक्ता काकलीकरिविहारिणी ॥ ११८ ॥

तथा चेतरशुद्धा संपूर्णारोहावरोहिणी ।
षड्जग्रहांशकन्यासवह्निबीजादिराजिता ॥ ११९ ॥

पराक्रमैकफलदा ह्युक्ता सिंहेन्द्रमध्यमा ।
संगीतविबुधैः सप्तपञ्चाशो ह्यधिकारकः ॥ १२० ॥

५८. सिंहरवमेललक्षणम्—

चतुःश्रुत्यृषभसाधारणगान्धारवर्णिनी ।
प्रतिमध्यमभूषाढ्या चतुःश्रुतिकधैवता ॥ १२१ ॥

कैशिकीतरशुद्धा संपूर्णारोहावरोहिणी ।
षड्जन्यासग्रहांशा च भूबीजसहिता शुभा ॥ १२२ ॥

संपत्पुष्टिकरी हेमवतिनी विबुधेडिता ।
कथिता गीतगैरष्टपञ्चाशो ह्यधिकारकः ॥ १२३ ॥

५९. धौम्यरागमेललक्षणम्—

चतुःश्रुत्यृषभसाधारणगान्धारभूषिता ।
प्रतिमध्यमसंयुक्ता चतुःश्रुतिकधैवता ॥ १२४ ॥

काकलीतरशुद्धा संपूर्णारोहावरोहिणी ।
षड्जग्रहांशकन्यासा जलबीजाक्षरास्पदा ॥ १२५ ॥

षड्जन्मानन्दनकरी धर्मविद्रतये स्थिता ।
अर्थकामादिफलदा नाम्ना धर्मवती शुभा ।
संगीतविद्भिरेकोनषष्टिसंख्योऽधिकारकः ॥ १२६ ॥

६०. निषादरागमेललक्षणम्—

चतुःश्रुत्यृषभसाधारणगान्धारसत्पथा ।
प्रतिमध्यमसंयुक्ता सषट्श्रुतिकधैवता ॥ १२७ ॥

काकलीतरशुद्धा संपूर्णारोहावरोहिका ।
षड्जग्रहांशकन्यासा चाकाशानलसंयुता ॥ १२८ ॥

न्यायवादिभिरत्यन्तपूजिता धर्मवर्तिनी ।
नाम्ना नीतिमती ख्याता सोऽयं षष्टितमो मतः ॥ १२९ ॥

६१. कुन्तलमेललक्षणम्—

चतुःश्रुःयृषभान्तर्गान्धारकप्रतिमध्यमा ।
तथा चेतरशुद्धा संपूर्णारोहावरोहिणी ॥ १३० ॥

षड्जग्रहांशकन्यासप्रभुभावविवक्षिणी ।
वायुबीजाक्षरवती घनस्वरकदम्बिनी ।
नाम्ना कान्तामणिः ख्याता ह्येकषष्टितमो मतः ॥ १३१ ॥

६२. रत्नभानुमेललक्षणम्—

चतुःश्रुत्यृषभान्तर्गान्धारकप्रतिमध्यमा ।
कैशिकीतरशुद्धा संपूर्णारोहावरोहिणी ॥ १३२ ॥

षड्जग्रहांशकन्यासा व्योमबीजविराजिता ।
घनस्वरकदम्बाढ्या कथिता रिषभप्रिया ।
धर्मस्वरूपिणी ह्येषा द्विषष्टितम इष्यते ॥ १३३ ॥

६३. गोत्रारिमेललक्षणम्—

चतुःश्रुत्यृषभान्तर्गान्धारकप्रतिमध्यमा ।
काकलीतरशुद्धा संपूर्णारोहावरोहिका ॥ १३४ ॥

षड्जग्रहांशकन्यासा भूबीजमृदुला शुभा ।
संपत्करी सेवकानां लताङ्गी बुधसंमता ।
गानविद्भिरिति प्रोक्ता स त्रिषष्टितमो मतः ॥ १३५ ॥

६४. भूषावलीमेललक्षणम्—

चतुःश्रुत्यृषभान्तर्गान्धारकप्रतिमध्यमः ।
चतुःश्रुतिधैवताढ्यः कैशिकीतरशुद्धकः ॥ १३६ ॥

संपूर्णारोहावरोहः षड्जन्यासांशकग्रहः ।
धरणीबीजसंयुक्तो लोकवन्द्यः सुरोत्तमः ॥ १३७ ॥

धनधान्यसुवस्तूनां लाभकृत्स्वेष्टपुष्टिकृत् ।
रागनायक इत्येव वाचस्पतिरुदाहृतः ।
गानविद्याविदां श्रेष्ठैश्चतुःषष्टितमो मतः ॥ १३८ ॥

६५. कल्याणीमेललक्षणम्—

चतुःश्रुत्यृषभान्तर्गान्धारकप्रतिमध्यमा ।
चतुःश्रुतिधैवतयुक्ताकलीतरशुद्धका ॥ १३९ ॥

संपूर्णारोहावरोहा षड्जन्यासांशकग्रहा ।
व्योमबीजयुतोत्साहवर्धनी बुधसंमता ।
नाम्ना च मेचकल्याणी पञ्चषष्टितमो मतः ॥ १४० ॥

६६. चतुरङ्गिणीमेललक्षणम्—

चतुःश्रुत्यृषभान्तर्गान्धारकप्रतिमध्यमा ।
षट्श्रुतिधैवतवती काकलीतरशुद्धिका ॥ १४१ ॥

संपूर्णारोहावरोहा षड्जन्यासांशकग्रहा ।
वायुबीजयुता चित्रचेलालंकारभूषणा ॥ १४२ ॥

विचित्ररागसहिता नाम्ना चित्राम्बरी शुभा ।
षट्षष्टितममाहुर्वा अधिकारं तु तद्विदः ॥ १४३ ॥

६७. सत्यवतीमेललक्षणम्—

षट्श्रुतिरिषभान्तर्गान्धारकप्रतिमध्यमा ।
तथा चेतरशुद्धा संपूर्णारोहावरोहिका ॥ १४४ ॥

षड्जग्रहांशकन्यासा प्रौढनायकसंमता ।
अग्निबीजयुता साध्वी स्वकीयनायकोत्सुका ॥ १४५ ॥

सुचरित्रेति कथिता चारित्रशुभभूषणा ।
सप्तषष्टितमः सोऽयमधिकारः प्रकीर्तितः ॥ १४६ ॥

६८. जोतिष्मतीमेललक्षणम्—

षट्श्रुतिरिषभान्तर्गान्धारकप्रतिमध्यमा ।
कैशिकीतरशुद्धा संपूर्णारोहावरोहिका ॥ १४७ ॥

षड्जग्रहांशकन्यासा भूजलानिलवर्तिनो ।
सृष्टिस्थितिकरी सर्वजीवान्तर्यामिनी मता ।
जोतिःस्वरूपिणी ह्येनमष्टषष्टितमं विदुः ॥ १४८ ॥

६९. धौतपञ्चममेललक्षणम्—

षट्श्रुत्यृषभसान्तर्गान्धारकप्रतिमध्यमा ।
काकलीतरशुद्धा संपूर्णारोहावरोहिका ॥ १४९ ॥

षड्जग्रहांशकन्यासा पयोवायुसुसंयुता ।
कामसंवर्धनी नृणां धातुवर्धनिनामिका ।
एकोनसप्ततितमः ख्यातोऽयमधिकारकः ॥ १५० ॥

७०. नासामणिमेललक्षणम्—

षट्श्रुत्यृषभसान्तर्गान्धारकप्रतिमध्यमा ।
चतुःश्रुतिधैवतका कैशिकीतरशुद्धका ॥ १५१ ॥

संपूर्णारोहावरोहा षड्जन्यासांशकग्रहा ।
वाय्वाकाशमहोल्लासविकासिच्छविसंयुता ॥ १५२ ॥

सुगन्धसारविन्नाम्ना नासिकाभूषणी शुभा ।
एषोऽधिकारः सप्ततितमो विद्भिरुदीरितः ॥ १५३ ॥

७१. कुसुमावलिमेललक्षणम्—

षट्श्रुत्यृषभसान्तर्गान्धारकप्रतिमध्यमः ।
चतुःश्रुतिधैवताढ्यः काकलीतरशुद्धकः ॥ १५४ ॥

संपूर्णारोहावरोहः षड्जन्यासांशकग्रहः ।
जलानिलयुतः श्रीमत्स्वराख्यसरयूर्जितः ॥ १५५ ॥

जगज्जीवनरक्षार्थमुद्यद्रामास्पदप्रियः ।
रक्षःशत्रुक्षयकरो रागोऽयं कोसलाभिधः ।
इममेकसप्ततितमाधिकारं प्रचक्षते ॥ १५६ ॥

७२. रसमञ्जरीमेललक्षणम्—

षट्श्रुत्यृषभसान्तर्गान्धारकप्रतिमध्यमः ।
षट्श्रुतिधैवतयुतः काकलीतरशुद्धकः ॥ १५७ ॥

संपूर्णारोहावरोहः षड्जन्यासांशकग्रहः ।
अग्निबीजयुतः सोऽयं रसिकप्रियनामकः ।
द्विसप्ततितमः सद्भिरधिकारः प्रकीर्तितः ॥ १५८ ॥

अथ मेलोत्पन्नरागनामान्युच्यन्ते—

१. प्रथमात्कनकाङ्ग्याख्यान्मेलाद्धि कनकाम्बरी ।
तथा शुद्धमुखारीति रागौ द्वौ जनितौ क्रमात् ॥ १ ॥

२. द्वैतीयीकात्तु रत्नाङ्गीमेलात्फेनद्युतिस्तथा ।
श्रीमणिर्घण्टारवश्च त्रय एते तु जज्ञिरे ॥ २ ॥

३. गानमूर्तिरिति ख्यातात्तृतीयान्मेलतः क्रमात् ।
रागौ द्वौ जनितौ सामवरालीभिन्नपञ्चमौ ॥ ३ ॥

४. वनस्पत्याह्वयान्मेलाच्चतुर्थादथ रागकौ ।
एको भानुमतीसंज्ञो रसालिर्नामतः परः ॥ ४ ॥

५. मानवत्याह्वयान्मेलात्पञ्चमाज्जनितावुभौ ।
रागौ मनोरञ्जनिकाघनश्यामलनामकौ ॥ ५ ॥

६. तानरूप्याह्वयान्मेलात्षष्ठाज्जनिकृतावुभौ ।
तनुकीर्त्यभिधो नाम्ना रागः शृङ्गारिणीति च ॥ ६ ॥

७. सेनापत्यभिधान्मेलात्सप्तमाज्जज्ञिरे त्रयः ।
रागाः सेनाग्रणीभोगिचिन्तामणिसमाह्वयाः ॥ ७ ॥

८. अष्टमाद्धनुमत्तोडीमेलाद्रागा नव क्रमात् ।
शुद्धतोडी च भूपालस्तथा नागवरालिका ॥ ८ ॥

शुद्धसामन्ताभिधानस्ततोऽसावेर्युपाह्वयः ।
सपुंनागवराल्याख्यः शुद्धसीमन्तिनामकः ।
राग आहिरिसंज्ञश्च तथा धन्यासिसंज्ञकः ॥ २ ॥

९. नवमाद्धेनुकामेलात्त्रयो रागास्तु जज्ञिरे ।
भिन्नषड्जस्तथा शोकवराली टक्क इत्यपि ॥ १० ॥

१०. नाटकप्रियमेलात्तु दशमाज्जनितौ क्रमात् ।
रागौ च दीपरनटाभरणाख्याविमावुभौ ॥ ११ ॥

११. कोकिलप्रियमेलादेकादशाज्जनितावुभौ ।
कोकिलारववर्धन्यौ नाम रागौ प्रकीर्तितौ ॥ १२ ॥

१२. द्वादशाद्रूपवत्याख्यान्मेलाद्दौप्यनगोऽजनि ॥ १३ ॥

१३. गायकप्रियमेलात्तु रागाः पञ्च त्रयोदशात् ।
हेज्जिज्जिर्मेघरागश्च जुजावलिरतः परम् ।
कलकण्ठी कलगड इत्येते हि जनिताः क्रमात् ॥ १४ ॥

१४. वकुलाभरणान्मेलाच्चत्वारो रागकाः स्मृताः ।
यथा रागवसन्तश्च वसन्तभैरवी तथा ।
सोमरागोऽथ वसन्तमुखारीति च कीर्तिताः ॥ १५ ॥

१५. मायामालवगौलाख्यमेलात्पञ्चदशात्स्मृताः ।
एकत्रिंशन्मिता रागा यथा सावेरिका ततः ॥ १६ ॥

जगन्मोहिनिरागश्च गौलो बौलिस्तथैव च ।
सारङ्गनाटसंज्ञश्च नाथनामक्रियस्तथा ॥ १७ ॥

मेचबौलिर्गुम्मकाम्भोजी रेगुप्तिसमाह्वयः ।
मलहरिश्च सालङ्गनाटमङ्गलकैशिकौ ॥ १८ ॥

ललिताद्यः पञ्चमो मारुवः शुद्धक्रियस्तथा ।
मेघरञ्जी च पाडी च पूर्णपञ्चम एव च ॥ १९ ॥

सुरसिन्धुर्देश्यगौलस्तथा गौरीसमाह्वयः ।
सिन्धुरामक्रियो गौलिपन्तुः सौराष्ट्रनामकः ॥ २० ॥

आर्द्रदेशिकरागश्च तथा गूर्जरिनामकः ।
तथा कन्नडवङ्गालो मार्गदेशिक एव च ।
परजुः पूर्विरागश्च वसन्तश्चेति नामतः ॥ २१ ॥

१६. षोडशाच्चक्रवाकाख्यान्मेलाद्रागास्त्रयः स्मृताः ।
कलावती तथा वेगवाहिन्यथ भुजङ्गिनी ॥ २२ ॥

१७. सूर्यकान्तात्सप्तदशात्सुप्रदीपः सभैरवः ॥ २३ ॥

१८. हाटकाम्बरिमेलादष्टादशात्तु त्रयो मताः ।
शुद्धमालविसिंहेलकल्लोला इति तान्विदुः ॥ २४ ॥

१९. एकोनविंशमेलात्तु झंकारध्वनिनामकात् ।
झंकारभ्रमरी पूर्णललिता चेत्युभौ स्मृतौ ॥ २५ ॥

२०. नरभैरवितो विंशाच्चतुर्विंशतिरीरिताः ।
भैरवी रीतिगौलश्च जयन्तश्रीस्तथैव च ॥ २६ ॥

सनारायणदेशादी हिन्दोलाभेरिनामकौ ।
उदयरविचन्द्रिकाऽऽनन्दभैरविरागकः ॥ २७ ॥

तथा देवक्रियश्चेन्दुवण्टारवसमाह्वयः ।
वसन्तवराली नागगान्धारी माञ्जिरेव च ॥ २८ ॥

शुद्धदेशी मार्गहिन्दोलको नायकिनामभाक् ।
कनकादिवसन्तश्च पूर्णषड्जस्तथैव च ॥ २९ ॥

गोपिकादिर्वसन्तश्च चापघण्टारवस्तथा ।
सहिन्दोलवसन्तः सारङ्गकाप्यभिधस्तथा ।
अमृताद्या वाहिनी च जिङ्ग्लाराग इति क्रमात् ॥ ३० ॥

२१. पञ्चापि कीरवाण्याख्यादेकविंशात्तु जज्ञिरे ।
जयश्रीकिरणावल्यौ माधवीराग एव च ।
कल्याणाख्यश्च कर्णाटदेवगान्धारिरित्यमी ॥ ३१ ॥

२२. द्वाविंशाच्च खरहरप्रियमेलात्तु जज्ञिरे ।
रागास्त्रिंशद्यथा श्र्याख्यो मालवश्रीस्ततः परम् ॥ ३२ ॥

रागः कन्नडगौलाख्यो मध्यमावतिरेव च ।
फलमञ्जरिसंज्ञश्च मणिरङ्गुस्तथैव च ॥ ३३ ॥

जयन्तसेनासैन्धव्यौ शुद्धधन्यासिकेति च ।
शुद्धभैरविकाभोग्यौ तथा सालगभैरवी ॥ ३४ ॥

जयनारायणी चैव मनोहरिसमाह्वयः ।
तथा मारुवधन्यासी कलानिधिरतः परम् ॥ ३५ ॥

पञ्चमः शुद्धबङ्गालो मञ्जर्याख्य उशेनिका ।
कापिः श्रीरञ्जनी चैव शुद्धवेलावलिस्तथा ॥ ३६ ॥

दर्बारुर्मन्दमारिश्च सिद्धसेनस्तथैव च ।
मल्लारुश्च मुखारी च तथा देवमनोहरी ।
बालघोषीति च ख्यातास्त एते च यथाक्रमम् ॥ ३७ ॥

२३. गौरीमनोहरीमेलाद्रागो वेलावलिः स्मृतः ।
२४. चतुर्विंशात्तु वरुणप्रियाद्वीरवसन्तकः ॥ ३८ ॥

२५. माररञ्जनिमेलात्तु पञ्चविंशाच्छरद्द्युतिः ।
ततो देशमुखारीति केसरीति त्रयं विदुः ॥ ३९ ॥

२६. षड्विंशाच्चारुकोशीतो जातामाहुस्तरङ्गिणीम् ॥ ४० ॥

२७. सरसाङ्ग्याः सप्तविंशमेलात्स्युः सुरसेनिका ।
दिव्यपञ्चमरागश्च कमलाद्यमनोहरी ॥ ४१ ॥

२८. अष्टाविंशाच्चतुस्त्रिंशद्धरिकाम्भोजिमेलकात् ।
काम्भोजी केदारगौलस्ततो नारायणी तथा ॥ ४२ ॥

नारायणाद्यगौलो मालवी च्छायातरङ्गिणी ।
बलहंसश्च नटनारायणी मोहनस्तथा ॥ ४३ ॥

कापिनारणिजञ्झूट्यौ शहनेशमनोहरी ।
प्रतापाद्यवराली च कुन्तलाद्यवरालिका ॥ ४४ ॥

सरस्वतीमनोहरी तथा नीलाम्बरी ततः ।
सामान्धालिद्विजावन्तीमत्तकोकिलनामकाः ॥ ४५ ॥

वङ्गालरागपञ्जरौ तथैव रविचन्द्रिका ।
कोकिलध्वनिनामा नवरसकन्नडाह्वयः ॥ ४६ ॥

स्वरावलिश्च नागस्वरावलिर्बहुदारिका ।
काम्भोजिर्यदुकुलाङ्का सुरटिश्च क्रमात्तु च ।
ततो नाटकुरञ्जी च देशाक्षी तदनन्तरम् ॥ ४७ ॥

२९. एकोनत्रिंशकाद्धीरशंकराभरणादिमे ।
कुरञ्जिरागः केदारश्चाहिरीनाट एव च ॥ ४८ ॥

माहुरिः कोलाहलश्च जनरञ्जनिका तथा ।
व्यागुहंसध्वनिश्चैव पूर्णचन्द्रिकया सह ॥ ४९ ॥

देवगान्धार्यारभिश्च नवरोजुसमाह्वयः ।
अठाणाख्यो जलाबुः कन्नडो बिलहरिस्तथा ॥ ५० ॥

शुद्धसावेरिका नागध्वनिः शुद्धवसन्तकः ।
बेगडाख्यो वर्धनी च सिन्धुरागस्तथैव च ॥ ५१ ॥

पूर्वगौलो गौडमल्लावर्ख्यश्चेति यथाक्रमम् ।
३०. नागानन्दिनिमेलात्तु त्रिंशात्सामन्त एककः ॥ ५२ ॥

३१. यागप्रियाख्यमेलादेकत्रिंशात्कलहंसकः ।
३२. रागचूडामणिर्मेलाद्द्वात्रिंशाद्रागवर्धनेः ॥ ५३ ॥

३३. मेलाद्वाङ्गेयभूषण्या गङ्गातरङ्गिणीजनिः ॥ ५४ ॥

३४. छायानाटश्चतुस्त्रिंशाद्रागधीश्वरितोऽजनि ।
साकं तु भानुमञ्जर्या शारदाभरणेन च ॥ ५५ ॥

३५. पञ्चत्रिंशाच्छूलिनीतो जातोऽसौ गानवारिधिः ।
३६. षट्त्रिंशाच्चलनाटात्तु नाटरागस्य संभवः ॥ ५६ ॥

३७. सालवीभोगसावेर्यौ सप्तत्रिंशात्तु सालगात् ।
३८. जगन्मोहनरागः स्यादष्टात्रिंशाज्जलार्णवात् ॥ ५७ ॥

३९. मेलाज्झालवराल्याख्यान्नवत्रिंशादुभौ स्मृतौ ।
पञ्चमः कोकिलाद्यश्च तथा भूपालपञ्चमः ॥ ५८ ॥

४०. मेलाच्च नवनीताख्याच्चत्वारिंशान्नभोमणिः ॥ ५९ ॥

४१. पावनीतश्चैकचत्वारिंशाद्रागावुभौ स्मृतौ ।
प्रभावली च चन्द्रज्योतिश्च रागौ हि तौ क्रमात् ॥ ६० ॥

४२. रघुप्रियाख्यान्मेलाद्द्विचत्वारिंशाज्जनिं गताः ।
रघुलीला च गन्धर्वो गोपतिश्चेति विश्रुताः ॥ ६१ ॥

४३. त्रिचत्वारिंशमेलाच्च गवाम्भोधेरुभौ स्मृतौ ।
गीर्वाणीराग एकः स्यादन्यः कलवसन्तकः ॥ ६२ ॥

४४. चतुश्चत्वारिंशमेलाद्भवानीसरसीरुहौ ।

४५. पञ्चचत्वारिंशमेलाच्छुभा पन्तुवरालिका ॥ ६३ ॥

४६. मेलात्षड्विधमार्गिण्याः षट्चत्वारिंशकादुभौ ।
तीव्रवाहिन्याख्य एकः श्रीकण्ठीनामकः परः ॥ ६४ ॥

४७. सप्तचत्वारिंशमेलात्सुवर्णाङ्गीसमाह्वयात् ।
सौवीररतिकाभीरुरागा एते तु जज्ञिरे ॥ ६५ ॥

४८. अष्टचत्वारिंशमेलाद्दिव्यमण्यभिधात्क्रमात् ।
जीवन्तिनी शुद्धगान्धार्याम्रपञ्चमरागकः ।
आदिपञ्चमरागश्चेत्येते चत्वार ईरिताः ॥ ६६ ॥

४९. नवचत्वारिंशकात्तु धवलाम्बरिनामकात् ।
धवलाङ्गी तथा भिन्नहेरालीराग एव च ।
तथैव देवगिर्याख्यो धर्माणी च चतुर्थिका ॥ ६७ ॥

५०. नामनारायणीमेलात्पञ्चाशाज्जनिमागताः ।
निर्मदो मन्दारिका प्रतापश्चेति त्रयस्त्विमे ॥ ६८ ॥

५१. कामवर्धनिमेलादेकपञ्चाशाज्जनिं गताः ।
रामक्रिया दीपकश्च तथा भोगवसन्तकः ॥ ६९ ॥

५२. रामप्रियाद्द्विपञ्चाशाज्जाता राममनोहरी ॥ ७० ॥

6

५३. त्रयःपञ्चाशमेलात्तु गमनश्रमनामकात् ।
गमनक्रियरागः सपूर्वकल्याणिरागकः ॥ ७१ ॥

५४. विश्वंभर्यास्तु वैशाखश्चतुःपश्चाशमेलकात् ॥ ७२ ॥

५५. मेलात्तु पञ्चपञ्चाशाच्छामलाङ्गीसमाह्वयात् ।
शामला देशावलिश्चेत्येतौ रागौ प्रकीर्तितौ ॥ ७३ ॥

५६. षण्मुखप्रियनाम्नः षट्पञ्चाशान्मेलकाद्विदुः ।
त्रिमूर्तिं च वसुकरीं भाषणीं गरिगद्यकम् ॥ ७४ ॥

५७. सिंहेन्द्रमध्यमात्सप्तपञ्चाशाज्जनिता इमे ।
सीमन्ती माधवमनोहरिका शेषनादकः ।
घण्टाणरागः सर्वाङ्गी शुद्धरागस्तथैव च ॥ ७५ ॥

५८. अष्टपञ्चाशकान्मेलाद्रागः सिंहरवः स्मृतः ।

५९. मेलात्तु नवपञ्चाशाद्धौम्यरञ्जनिके स्मृते ॥ ७६ ॥

६०. मेलात्षष्टितमान्नीतिमत्याख्याच्च निषादकः ।
हंसनादाभिधो गौरिक्रियः कैकवशीति च ॥ ७७ ॥

६१. एकषष्टितमान्मेलात्कान्तामण्याह्वयात्क्रमात् ।
रागौ द्वौ प्रथितौ नाम्ना कुन्तलः श्रुतिरञ्जनी ॥ ७८ ॥

६२. द्विषष्टितममेलात्तु रत्नभानुरजायत ।
६३. गोत्रारिस्तु लताङ्गीतस्त्रिषष्टितममेलकात् ॥ ७९ ॥

६४. षड्वाचस्पतिमेलात्तु चतुःषष्टितमादिमे ।
बर्वरश्चोत्तरी चैव भूषावलिसमाह्वयः ।
सारङ्गाख्यः सरस्वत्यभिधो भोगीश्वरीति च ॥ ८० ॥

६५. पञ्चषष्टितमान्मेलान्मेचकल्याणिनामकात् ।
जातौ कौमोदयमुनाकल्याणीनामकावुभौ ॥ ८१ ॥

६६. षट्षष्टितममेलाच्चित्राम्बर्याश्चतुरङ्गिणी ।
६७. सुचरित्रात्सप्तषष्टितमात्सत्यवतीजनिः ॥ ८२ ॥

६८. जोतिष्मती तु जोतिःस्वरूपिण्याः समजायत ।
६९. नवषष्टितमान्मेलाद्धौतपञ्चम उद्ययौ ॥ ८३ ॥

७०. मेलात्तु सप्ततितमान्नासिकाभूषणीरितात् ।
नासामण्यभिधः राग एकस्तु समजायत ॥ ८४ ॥

७१. कुसुमावलिरागस्तु कोसलादेकसप्ततात् ॥ ८५ ॥

७२. द्वासप्ततितमान्मेलाद्रसिकप्रियनामकात् ।
रसमञ्जरिरागः स्यादिति रागसमुद्भवः ॥ ८६ ॥

अथ तत्तन्मेलजानां रागाणां लक्षणानि—

१. कनकाङ्गीसुमेलाच्च कनकाम्बरिनामकः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे वक्रसंपूर्णमवरोहे समग्रकम् ।
सगरीगामपाधानी धसनीधापमागरी ॥ १ ॥

कनकाङ्गीसुमेलाच्च जाता शुद्धमुखारिका ।
षड्जन्यासांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे तु सुसंपूर्णमवरोहे पवर्जितम् ।
सरिगामापधानीसा निधमागारिसानिसा ॥ २ ॥

२. रत्नाङ्गीमेलसंजाता फेनद्युतिरितीरिता ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
गवर्ज्यं वक्रमारोहेऽप्यवरोहे पवर्जितम् ।
सरिमापाधपानीसा ससनीधामगारिसा ॥ १ ॥

रत्नाङ्गीमेलसंजातः श्रीमणीराग एव च ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे मनिवर्ज्यं चाप्यवरोहे मवर्जितम् ।
सरिगापाधसासानी धपगारीसनीधसा ॥ २ ॥

रत्नाङ्गीमेलसंजातो रागो घण्टारवस्तथा ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।

धवर्ज्यवक्रमारोहे त्ववरोहे समग्रकम् ।
सरीसगमपानीसा सनीधपमगारिसा ॥ ३ ॥

३. गानमूर्तिसुमेलाच्च जाता सामवरालिका ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे तु गवर्ज्यं चाप्यवरोहे समग्रकम् ।
सरिमापाधनीसानी धपमागारिसानिसा ॥ १ ॥

गानमूर्तिसुमेलाच्च जातो वै भिन्नपञ्चमः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे तु रिवर्ज्यं चाप्यवरोहे समग्रकम् ।
सगमापाधनीसानी धपमागारिसानिसा ॥ २ ॥

४. वनस्पतिसुमेलाच्च जाता भानुमतीति सा ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे धनिवर्ज्यं चाप्यवरोहे समग्रकम् ।
सरिगारिमपासासा सनिधापामगारिसा ॥ १ ॥

वनस्पतिसुमेलाच्च रसालीरागसंभवः ।
रिन्यासं रिषभांशं च रिषभग्रहमुच्यते ।
आरोहे तु गवर्ज्यं च गनिवर्ज्यावरोहकम् ।
सरिमापाधनीसानी सधपामारिसानिसा ॥ २ ॥

५. मानवत्यधिकाराच्च मनोरञ्जनिनामकः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे तु गवर्ज्यं च पूर्णवक्रावरोहकम् ।
सरिमापाधनीसानी सनिधापाधमागरी ॥ १ ॥

मानवत्याख्यमेलाच्च घनश्यामलनामकः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे रिनिवर्ज्यं चाप्यवरोहे समग्रकम् ।
सगमापाधसासानी धपमागारिसाधसा ॥ २ ॥

६. तानरूपिसुमेलाच्च तनुकीर्त्यभिधोऽजनि ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे गधवर्ज्यं च वक्रपूर्णावरोहकम् ।
सरिमापानिसासानी धनिपामागमारिसा ॥ १ ॥

तानरूपिसुमेलाच्च जाता शृङ्गारिणी किल ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहेऽधनि वक्रं चाप्यवरोहे समग्रकम् ।
सगरीपमपासानी धपमागरिसापसा ॥ २ ॥

७. सेनापत्याख्यमेलात्तु रागः सेनाग्रणीस्तथा ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।

पवर्ज्यवक्रमारोहेऽप्यवरोहे समग्रकम् ।
सरिगारिमगामाधा निसनीधपमागरी ॥ १ ॥

सेनापत्याख्यमेलात्तु रागो भोगिसमाह्वयः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
रिवर्ज्यवक्रमारोहेऽप्यवरोहे रिवर्जितम् ।
सगमापःधनीधासा निधापमगसाधसा ॥ २ ॥

सेनापत्याख्यमेलात्तु जातश्चिन्तामणिस्तथा ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
समग्रवक्रमारोहेऽप्यवरोहे तथैव च ।
सरिगामसमापाधा निसधानिपमागरी ॥ ३ ॥

८. हनुमत्तोडिमेलाच्च तोडीराग उदाहृतः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहेऽप्यवरोहे च पवर्ज्यं षाडवं तथा ।
सरिगामधनीसासा सनिधामगरीससा ॥ १ ॥

हनुमत्तोडिमेलाच्च जातो भूपालनामकः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहेऽप्यवरोहे च मनिवर्ज्यं तथौडुवम् ।
सरिगापापधाधासा सधपागागरीससा ॥ २ ॥

हनुमत्तोडिमेलाच्च जाता नागवरालिका ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे पूर्णवक्रं चाप्यवरोहे समग्रकम् ।
निसागरिगमापाधा पमागरिसनीनिसा ॥ ३ ॥

हनुमत्तोडिमेलाच्च शुद्धसामन्तनामकः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे गनिवर्ज्यं चाप्यवरोहे निर्वर्जितम् ।
धसरीरिमपापाधा पममागगरीरिसा ॥ ४ ॥

हनुमत्तोडिमेलाच्च जाताऽसावेरिनामिका ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे गनिवर्ज्यं चाप्यवरोहे समग्रकम् ।
सरिमापाधसासानी धपमागारिसारिसा ॥ ५ ॥

हनुमत्तोडिमेलाच्च स्यात्पुंनागवरालिका ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहेऽप्यवरोहे च पूर्णो मध्यमरागकः ।
निसरीगामपाधानी निधपामागरीसनी ॥ ६ ॥

हनुमत्तोडिमेलाच्च शुद्धसीमन्तिरागकः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।

आरोहेऽप्यवरोहे च निवर्ज्यं षाडवं तथा ।
सरिगामापधाधासा सधपामागरीरिसा ॥ ७ ॥

हनुमत्तोडिमेलात्स्याद्राग आहिरिनामकः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
संपूर्णं वक्रमारोहेऽप्यवरोहे समग्रकम् ।
सरिसागमपाधानी सनिधापमगारिसा ॥ ८ ॥

हनुमत्तोडिमेलाच्च जातो धन्यासिनामकः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे रिधवर्ज्यं चाप्यवरोहे समग्रकम् ।
सगमापनिसासानी धपमागरिसानिसा ॥ ९ ॥

९. धेनुकामेलसंजातो भिन्नषड्जकनामकः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
धवर्ज्यवक्रमारोहेऽप्यवरोहे निवर्जितम् ।
सरिगारिपमापानी सधपामगरीसरी ॥ १ ॥

धेनुकामेलजः शोकवरालीराग एव च ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे रिपवर्ज्यं चाप्यवरोहे समग्रकम् ।
सससागगमामानी निधपामागरीरिसा ॥ २ ॥

धेनुकामेलसंजातष्टक्कराग इतीरितः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
रिवर्ज्यवक्रमारोहेऽप्यवरोहे समग्रकम् ।
सगपामाधधानीसा सनिधापामगारिसा ॥ ३ ॥

१०. नाटकप्रियमेलाच्च जातो दीपरनामकः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे चाथ संपूर्णं पूर्णवक्रावरोहकम् ।
सरिगामपधानीसा निधनीपमगारिसा ॥ १ ॥

नाटकप्रियमेलाच्च नटाभरणसंज्ञकः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहेऽप्यवरोहे च संपूर्णं वक्रमेव च ।
सरिगामपधापानी सनिधापमगामरी ॥ २ ॥

११. कोकिलप्रियमेलाच्च कोकिलारवनामकः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे वक्रसंपूर्णमवरोहे समग्रकम् ।
सरिगारिमपाधानी सनिधापमगारिसा ॥ १ ॥

कोकिलप्रियमेलाच्च संजाता वर्धनी तथा ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।

आरोहेऽप्यवरोहे च रिवर्ज्यं वक्रमेव च ॥
सगमापामपाधानी सनिपाधपमागसा ॥ २ ॥

१२. रूपवत्याख्यमेलात्तु रागो रौप्यनगोऽजनि ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे रिगवर्ज्यं च वक्रपूर्णावरोहकम् ।
समपापाधनीसानी धनिपामागरीससा ॥ १ ॥

१३. गायकप्रियमेलाच्च रागो हेज्जज्जिनामकः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे तु निवर्ज्यं चाप्यवरोहे समग्रकम् ।
सरिगामपधाधासा सनिधापमगारिसा ॥ १ ॥

गायकप्रियमेलाच्च जातो मेघ इति स्मृतः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
गवर्ज्यवक्रमारोहेऽप्यवरोहे गवर्जितम् ।
सरिमापानिधापासा सनिधापामरीससा ॥ २ ॥

गायकप्रियमेलाच्च जुजावलिरुदाहृता ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहेऽप्यवरोहे च रिवर्ज्यं वक्रमेव च ।
समगामपधानीसा सधनीधपमागसा ॥ ३ ॥

गायकप्रियमेलाच्च कलकण्ठीसुनामकः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहेऽप्यवरोहे च गवर्ज्यं षाडवं तथा ।
सरिमापाधनीसासा सनिधापमरीससा ॥ ४ ॥

गायकप्रियमेलाच्च रागः कलगडसंज्ञकः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहेऽप्यवरोहे च मवर्ज्यं षाडवं तथा ।
सरिगापापधानीसा सनिधापापगारिसा ॥ ५ ॥

१४. वकुलाभरणान्मेलाज्जातो रागवसन्तकः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
गवर्ज्यवक्रमारोहे पूर्णवक्रावरोहकम् ।
सरिमापनिधासासा निधमापमगारिसा ॥ १ ॥

वकुलाभरणाज्जातो रागो वासन्तभैरवी ।
धन्यासं धांशकं चैव धैवतग्रहमुच्यते ।
आरोहे तु पवर्ज्यं च पूर्णवक्रावरोहकम् ।
सरिगामधनीसासा निधमापमगारिसा ॥ २ ॥

वकुलाभरणान्मेलात्संजातः सोमनामकः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।

गवर्ज्यवक्रमारोहेऽप्यवरोहे पवर्जितम् ।
सरिमापमधानीसा सनिधामगरीससा ॥ ३ ॥

वकुलाभरणान्मेलाद्वसन्ताद्या मुखारिका ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
रिवर्ज्यवक्रमारोहेऽप्यवरोहे समग्रकम् ।
समगामपधानीसा सनिधापमगारिसा ॥ ४ ॥

१५. मायामालवगौलाच्च मेलात्सावेरिनामकः ।
मन्यासं मांशकं चैव मध्यमग्रहमुच्यते ।
आरोहे गनिवर्ज्यं चाप्यवरोहे समग्रकम् ।
सरिमापाधसासानी धपमागारिसारिसा ॥ १ ॥

मायामालवगौलाच्च जगन्मोहनिसंभवः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे रिधवर्ज्यं चाप्यवरोहे धवर्जितम् ।
सगमापानिसासानी पमगारिसनीससा ॥ २ ॥

मायामालवगौलाच्च गौलरागः प्रकीर्तितः ।
निन्यासं न्यंशकं चैव निषादग्रहमुच्यते ।
आरोहेऽप्यवरोहे च धवर्ज्यं वक्रमेव च ।
सरिगामारिमापानी सनिपामागमारिसा ॥ ३ ॥

मायामालवगौलाच्च बौलिरागो भवेत्पुनः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे मनिवर्ज्यं चाप्यवरोहे मवर्जितम् ।
सरिगापाधसासानी सनिधापागरीरिसा ॥ ४ ॥

मायामालवगौलाच्च रागः सारङ्गनाटकः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे गनिवर्ज्य च पूर्णवक्रावरोहकम् ।
सरिमापाधसानीसा धपमागारिसानिसा ॥ ५ ॥

मायामालवगौलाच्च नाथरामक्रियः स्मृतः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
संपूर्णारोहावरोहो मध्यरागः स कीर्तितः ।
सरिगामपधानीधा पमगारिसरीससा ॥ ६ ॥

मायामालवगौलाच्च मेचबौलिरुदाहृतः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे मनिवर्ज्यं चाप्यवरोहे समग्रकम् ।
सरिगापाधसासानी धपमागारिसारिसा ॥ ७ ॥

मायामालवगौलाच्च गुम्मकाम्भोजिनामकः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।

मवर्ज्यवक्रमारोहेऽप्यवरोहे समग्रकम् ।
सरिगापाधनीधासा सनिधापामगारिसा ॥ ८ ॥

मायामालवगौलाच्च रेवगुप्तिरितीरितः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहेऽप्यवरोहे च मनिवर्ज्यं तथौडुवम् ।
सरिगापाधसाधासा सधपागारिसारिसा ॥ ९ ॥

मायामालवगौलाच्च रागो मलहरिः स्मृतः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे गनिवर्ज्यं चाप्यवरोहे निवर्जितम् ।
सरिमापाधसासाधा सधपामागरीससा ॥ १० ॥

मालामालवगौलाच्च रागः सालङ्गनाटकः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
वक्रारोहं गनीवर्ज्यं पूर्णवक्रावरोहकम् ।
सरीसमपधासाधा सनीसधपमागरी ॥ ११ ॥

मायामालवगौलाच्च जातो मङ्गलकैशिकः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
रविर्ज्यवक्रमारोहेऽप्यवरोहे समग्रकम् ।
समगामपमाधानी सनिधापमगारिसा ॥ १२ ॥

मायामालवगौलाच्च जातो ललितपञ्चमः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे तु पवर्ज्य च पूर्णवक्रावरोहकम् ।
सरिगामाधनीसानी धमपामगरीरिसा ॥ १३ ॥

मायामालवगौलाच्च रागो मारुवसंज्ञकः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
रिवर्ज्यवक्रमारोहे पूर्णवक्रावरोहकम् ।
सगमापाधनीसानी धपमापामगारिसा ॥ १४ ॥

मायामालवगौलाच्च शुद्धक्रिय उदाहृतः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
वक्रारोहे गनीवर्जमवरोहे निवर्जितम् ।
सरिपामपधाधासा सधपामगरीरिसा ॥ १५ ॥

मायामालवगौलाच्च मेघरञ्जिरुदाहृतः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहेऽप्यवरोहे च पधवर्ज्यं तथौडुवम् ।
सरिगामानिसानीसा सनिमागारिसारिसा ॥ १६ ॥

मायामालवगौलाच्च पाडिराग उदाहृतः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।

आरोहे गधवर्ज्यं वक्रावरोहे गवर्जितम् ।
सरिमापानिसानीसा सनिपाधापमारिसा ॥ १७ ॥

मायामालवगौलाच्च रागः स्यात्पूर्णपञ्चमः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
निवर्ज्यारोहावरोहं मध्यस्थानसमुद्भवम् ।
सरिगामपधाधाप मगरीसमगारिसा ॥ १८ ॥

मायामालवगौलाच्च सुरसिन्धुरुदीरितः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
रिवर्ज्यवक्रमारोहे पूर्णवक्रावरोहकम् ।
समगामपधानीधा सनिधापमरीगसा ॥ १९ ॥

मायामालवगौलाच्च देश्यगौल उदाहृतः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहेऽप्यवरोहे च गमवर्जितवक्रकम् ।
सरिसापधनीनीसा निधपासरिसारिसा ॥ २० ॥

मायामालवगौलाच्च गौरीराग उदीरितः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे गधवर्ज्यं चाप्यवरोहे समग्रकम् ।
सरिमापानसासानी धपमागारिसानिसा ॥ २१ ॥

मायामालवगौलात्तु सिन्धुरामक्रियः स्मृतः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहणे रिवर्ज्यं वक्रावरोहे रिवर्जितम् ।
सगमापाधनीधानी सनीपाधपमागसा ॥ २२ ॥

मायामालवगौलाच्च गौलिपन्तुरुदाहृतः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
संपूर्णवक्रमारोहेऽप्यवरोहे समग्रकम् ।
सरिगारिमपाधापा निसनीधपमागरी ॥ २३ ॥

मायामालवगौलाच्च रागः सौराष्ट्रसंज्ञकः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहेऽप्यवरोहे च संपूर्णस्वरसंयुतम् ।
सरीगामपधानीसा सनीधापमगारिसा ॥ २४ ॥

मायामालवगौलाच्च रागः स्यादार्द्रदेशिकः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहणे तु संपूर्णमवरोहे निवर्जितम् ।
सरिगामपधानीसा सधापमगरीससा ॥ २५ ॥

मायामालवगौलात्तु गूर्जरीराग इष्यते ।
गन्यासं गांशकं चैव गान्धारग्रहमेव च ।

आरोहणे तु संपूर्णं पूर्णवक्रावरोहकम् ।
सरिगामपधानीसा धनिपामगरीससा ॥ २६ ॥

जातः कन्नडबङ्गालो मायामालवगौलकात् ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
निवर्ज्यवक्रमारोहेऽप्यवरोहे निवर्जितम् ।
सरिमागमधापाधा पधसाधपमागरी ॥ २७ ॥

मायामालवगौलाच्च जातोऽसौ मार्गदेशिकः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे मनिवर्ज्यं वक्रावरोहे निवर्जितम् ।
सरिगापाधसाधासा सधमापगरीससा ॥ २८ ॥

मायामालगौलाच्च परजूराग ईरितः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहेऽप्यवरोहे च संपूर्णस्वरसंयुतम् ।
सरिगामपधानीसा सनिधापमगारिसा ॥ २९ ॥

मायामालवगौलाच्च पूर्विराग उदीरितः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहेऽप्यवरोहे च संपूर्णस्वरसंयुतम् ।
सरिगामपधानीसा सनिधापमगारिसा ॥ ३० ॥

मायामालवगौलाच्च वसन्तो राग इष्यते ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे रिपवर्ज्यं चाप्यवरोहे पवर्जितम् ।
सगामधनिसानीसा सनिधामगरीससा ॥ २१ ॥

१६. चक्रवाकाख्यमेलाच्च जाता सा तु कलावती ।
रिन्यासं यंशकं चैव रिषभग्रहमुच्यते ।
आरोहे गनिवर्ज्यं वक्रावरोहे निवर्जितम् ।
सरिमापापधाधासा सधपामागसारिसा ॥ १ ॥

चक्रवाकाख्यमेलाच्च नाम्ना वै वेगवाहिनी ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे पूर्णवक्रं चाप्यवरोहे समग्रकम् ।
सरिगामापधानीधा सनिधापामगारिसा ॥ २ ॥

भुजङ्गिनी च संजाता चक्रवाकाख्यमेलतः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
पवर्ज्यवक्रमारोहेऽप्यवरोहे पवर्जितम् ।
सरिसामगमानीधा निसनीधमगारिसा ॥ ३ ॥

१७. सूर्यकान्ताख्यमेलाच्च सुप्रदीप इतीरितः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।

आरोहे तु गवर्ज्यं स्यात्पूर्णवक्रावरोहकम् ।
सरिमापाधनीनींसा निधपामागमारिसा ॥ १ ॥

सूर्यकान्ताख्यमेलाच्च भैरवः समजायत ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे तु सुसंपूर्णमवरोहे निवर्जितम् ।
सरिगामपधानीसा सधपामगरीससा ॥ २ ॥

१८. हाटकाम्बरिमेलाच्च संजाता शुद्धमालवी ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहेऽप्यवरोहे च संपूर्णं वक्रमेव च ।
सगरीगामपाधानी धसनीधापमागरी ॥ १ ॥

हाटकाम्बरिमेलाच्च संजातः सिंहलस्तथा ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे तु सुसंपूर्णं पूर्णवक्रावरोहकम् ।
सरिगामापधानीसा निधनीपामगारिसा ॥ २ ॥

हाटकाम्बरिमेलाच्च कल्लोलः समजायत ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहेऽरिगमं वक्रावरोहे तु रिवर्जितम् ।
सपपाधानिसासानी धनिपामागसानिसां ॥ ३ ॥

१९. झङ्कारध्वनिमेलाच्च झङ्कारभ्रमरी ह्यभूत् ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे पूर्णवक्रं चाप्यवरोहे समग्रकम् ।
सगरीगामपाधानी धसनीधापमागरी ॥ १ ॥

नाम्ना च पूर्णललिता झङ्कारध्वनिमेलतः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
वक्रारोहे धनीवर्ज्यमवरोहे समग्रकम् ।
सरिगारिमपासासा सनिधापमगारिसा ॥ २ ॥

२०. नरभैरविमेलाच्च भैरवींराग इष्यते ।
धन्यासं धांशकं चैव धैवतग्रहमुच्यते ।
पवर्ज्यवक्रमारोहेऽप्यवरोहे पवर्जितम् ।
सरिगामनिधानीसा सनिधामगरोससा ॥ १ ॥

नरभैरविमेलाच्च रीतिगौल उदाहृतः ।
निन्यासं न्यंशकं चैव निषादग्रहमुच्यते ।
आरोहेऽप्यवरोहे च संपूर्णं वक्रमेव हि ।
सगारिगमपानीसा निधमापधमागरी ॥ २ ॥

नरभैरविमेलाच्च जयन्तश्रीरुदाहृता ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।

आरोहे रिपवर्ज्यं वक्रावरोहे रिवर्जितम् ।
सगामधनिसानीसा निधमापमगासनी ॥ ३ ॥

नरभैरवितो नारायणदेशादिरीरितः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे पूर्णवक्रं चाप्यवरोहे समग्रकम् ।
सरीसगमपाधाप निसानिधपमागरी ॥ ४ ॥

नरभैरविमेलाच्च जातो हिन्दोलनामकः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ॥
वक्रारोहेऽवरोहे च रिपवर्ज्यं विदुर्बुधाः ।
समगामधनीसासा सनिधामगसानिसा ॥ ५ ॥

नरभैरविमेलाच्च राग आभेरिनामकः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे रिधवर्ज्यं चाप्यवरोहे समग्रकम् ।
सगमापानिसासानी धपमागारिसानिसा ॥ ६ ॥

नरभैरवितो जाता ह्युदयरविचन्द्रिका ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहेऽप्यवरोहे च रिधवर्ज्यं तथौडुवम् ।
सगमापानिसानीसा सनिपामागसागसा ॥ ७ ॥

नरभैरविमेलात्तु जाता ह्यानन्दभैरवी ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
संपूर्णवक्रमारोहेऽप्यवरोहे समग्रकम् ।
सगरीगामपाधाप सनिधापमगारिसा ॥ ८ ॥

नरभैरविमेलात्तु देवक्रिय उदाहृतः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
पवर्ज्यवक्रमारोहे पूर्णवक्रावरोहकम् ।
सरिगामनिधानीधा पधमागरिसारिसा ॥ ९ ॥

नरभैरविमेलाद्वा इन्दुघण्टारवोऽजनि ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
रिवर्ज्यवक्रमारोहेऽप्यवरोहे समग्रकम् ।
सगमापधपानीसा निधपामगरीससा ॥ १० ॥

नरभैरविमेलाच्च सा वसन्तवरालिका ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे तु गवर्ज्यं स्यादवरोहे मवर्जितम् ।
सरिमापधनीधानी धपगारिसरीससा ॥ ११ ॥

नरभैरविमेलाच्च नागगान्धारिका मता ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।

आरोहेऽप्यवरोहे च संपूर्णं मध्यसप्तकम् ।
सरिगामपधाधानी निधापममगारिसा ॥ १२ ॥

नरभैरविमेलाच्च माञ्जीराग उदाहृतः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहेऽप्यवरोहे च संपूर्णमिदमिष्यते ।
सरीगामपधानीसा सनीधापमगारिसा ॥ १३ ॥

नरभैरविमेलाच्च शुद्धदेशी व्यजायत ।
पन्यासं पांशकं चैव पञ्चमग्रहमुच्यते ।
आरोहे तु गवर्ज्यं स्यादवरोहे समग्रकम् ।
सरिमापधनीनीसा सनिधापमगारिसा ॥ १४ ॥

नरभैरविमेलात्तु मार्गहिन्दोल इष्यते ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे तु सुसंपूर्णमवरोहे रिवर्जितम् ।
सरिगामपधानीसा निधपामगसारिसा ॥ १५ ॥

नरभैरविमेलाच्च नायकीराग इष्यते ।
निन्यासं न्यंशकं चैव निषादग्रहमुच्यते ।
गवर्ज्यवक्रमारोहेऽप्यवरोहे समग्रकम् ।
सरिसामपधानीधा पसनीधपमागरी ॥ १६ ॥

कनकाद्यवसन्तश्च नरभैरविमेलजः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
रिवर्ज्यवक्रमारोहे त्ववरोहे समग्रकम् ।
सगमापनिधासानी धपमागरिसानिसा ॥ १७ ॥

नरभैरविमेलात्तु संजातः पूर्णषड्जकः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
वक्रारोहेऽरिगनिकमवरोहे रिवर्जितम् ।
सपमापधपासासा सनिधामगरीससा ॥ १८ ॥

गोपिकाद्यवसन्तश्च नरभैरविमेलजः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
वक्रारोहे रिगवर्ज्यमवरोहे रिवर्जितम् ।
समपानिधनीधासा निधपामगसाधसा ॥ १९ ॥

नरभैरविमेलात्तु चापघण्टारवः स्मृतः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे रिधवर्ज्यं चाप्यवरोहे पवर्जितम् ।
सगमामपनीधामा गरिनीसगरीनिसा ॥ २० ॥

स्याद्धिन्दोलवसन्तश्च नरभैरविमेलतः ।
धन्यासं धांशकं चैव धैवतग्रहमुच्यते ।

आरोहेऽप्यवरोहे च रिवर्ज्यं वक्रमेव च ।
सगमापधनीधासा निधपामधमागसा ॥ २१ ॥

सारङ्गकापिरागश्च नरभैरविमेलजः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
वक्रारोहे गधवर्ज्यमवरोहे समग्रकम् ।
सरिपामरिमापानी सनिधापमगारिसा ॥ २२ ॥

नरभैरविमेलात्तु जाता ह्यमृतवाहिनी ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
गान्धारवर्ज्यमारोहेऽप्यवरोहे पवर्जितम् ।
सरीमपधनीसासा सनिधामगरीससा ॥ २३ ॥

नरभैरविमेलात्तु जिङ्ग्लारागः प्रकीर्तितः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
संपूर्णवक्रमारोहेऽप्यवरोहे समग्रकम् ।
सरिगामपधानीधा पसनीधापमागरी ॥ २४ ॥

२१. कीरवाणीमेलजाता जयश्रीरिति हि स्मृता ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
संपूर्णवक्रमारोहेऽप्यवरोहे समग्रकम् ।
सरिगामपधानीधा सनिधापमगारिसा ॥ १ ॥

कीरवाणीमेळजाता किरणावलिनामिका ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे तु सुसंपूर्णमवरोहे निवर्जितम् ।
सरिगामपधानीसा सधापमगरीससा ॥ २ ॥

कीरवाणीमेळजाता माधवी परिकीर्तिता ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
रिवर्ज्यवक्रमारोहे पूर्णवक्रावरोहकम् ।
समगामपधानीसा निधपामसमागरी ॥ ३ ॥

कीरवाणीमेळजातः स्यात्कल्याणवसन्तकः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
रिपवर्जितमारोहेऽप्यवरोहे समग्रकम् ।
सगमाधनिसासानी धपमागरिसानिसा ॥ ४ ॥

कर्णाटदेवगान्धारी कीरवाणीसमुद्भवा ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे तु रिवर्ज्यं चाप्यवरोहे समग्रकम् ।
सगमापमपाधापा मगरीसानिसानिसा ॥ ५ ॥

२२. अधिकारात्खरहरप्रियाच्छ्रीराग इष्यते ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।

आरोहे गधवर्ज्यं च पूर्णवक्रावरोहकम् ।
सरिमापनिसानीपा धनीपमरिगारिसा ॥ १ ॥

मालवश्रीः खरहरप्रियमेलादजायत ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
रिवर्ज्यवक्रमारोहेऽप्यवरोहे रिवर्जितम् ।
सगमापनिधानीपा निसानिधपमागसा ॥ २ ॥

मेलाज्जातः खरहरप्रियात्कन्नडगौलकः ।
निन्यासं न्यंशकं चैव निषादग्रहमुच्यते ।
आरोहणे धवर्ज्यं चाप्यवरोहे रिवर्जितम् ।
सरिगामपनीनीसा निधपामगसानिसा ॥ ३ ॥

मेलाज्जाता खरहरप्रियाद्वै मध्यमावती ।
मन्यासं मांशकं चैव मध्यमग्रहमुच्यते ।
आरोहेऽप्यवरोहे च गधवर्ज्यं तथौडुवम् ।
सरिमापमपानीसा सनिपामरिसानिसा ॥ ४ ॥

मेलाज्जाता खरहरप्रियाद्वै फलमञ्जरी ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे रिपनीवर्ज्यं पूर्णवक्रावरोहकम् ।
सगगाममधाधासा निधपामगमारिसा ॥ ५ ॥

मणिरङ्गुः खरहरप्रियमेलादजायत ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
धवर्ज्यवक्रमारोहेऽप्यवरोहे धवर्जितम् ।
सरिमागमपानीसा निपमागरिसानिसा ॥ ६ ॥

रागो जयन्तसेनाख्यो मेलात्खरहरप्रियात् ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे रिनिवर्ज्यं चाप्यवरोहे रिवर्जितम् ।
सगमामपधासासा निधपामगसानिसा ॥ ७ ॥

नाम्ना मेलात्खरहरप्रियाज्जाता तु सैन्धवी ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहेऽप्यवरोहे च मध्यमं पूर्णमेव च ।
निधनीसरिगामापा मगरीसनिधानिसा ॥ ८ ॥

शुद्धधन्यासिरागः स्यान्मेलात्खरहरप्रियात् ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
वक्रारोहे रिधवर्ज्यं रिधवर्ज्यावरोहकम् ।
सगमापनिपासासा सनिपामगसागसा ॥ ९ ॥

शुद्धभैरविरागः स्यान्मेलात्खरहरप्रियात् ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।

रिपवर्ज्यारोहवक्रमवरोहे पवर्जितम् ।
सगमामानिधासानी धमगारिसगारिसा ॥ १० ॥

आभोगिनामा रागः स्यान्मेलात्खरहरप्रियात् ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहेऽप्यवरोहे च पनिवर्ज्यं तथौडुवम् ।
सरिगामगमाधासा सधमामगरीससा ॥ ११ ॥

मेलाज्जाता खरहरप्रियात्सालगभैरवी ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे गनिवर्ज्यं चाप्यवरोहे समग्रकम् ।
सरिमापधसासानी धपमागरिसाधसा ॥ १२ ॥

जयनारायणीरागो मेलात्खरहरप्रियात् ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे तु निवर्ज्यं स्यादवरोहे समग्रकम् ।
सरिगामपधासानी धपमागरिसाधसा ॥ १३ ॥

मेलाज्जाता खरहरप्रियान्नाम्ना मनोहरी ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
निवर्ज्यवक्रमारोहे त्ववरोहे निवर्जितम् ।
सगरीगामपाधासा धपमागरिसाधसा ॥ १४ ॥

जाता मारुवधन्यासी मेलात्खरहरप्रियात् ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
रिवर्ज्यवक्रमारोहे पूर्णवक्रावरोहकम् ।
सगमापधनीसानी धपमाधमगारिसा ॥ १५ ॥

मेलाज्जातः खरहरप्रियाद्रागः कलानिधिः ।
धन्यासं धांशकं चैव धैवतग्रहमुच्यते ।
संपूर्णवक्रमारोहेऽप्यवरोहे समग्रकम् ।
सरिगामसपामाधा निसनीधपमागरी ॥ १६ ॥

मेलाज्जातः खरहरप्रियाद्रागस्तु पञ्चमः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
गमवर्ज्यारोहवक्रमवरोहे समग्रकम् ।
सरिधाधपनीसानी धपमागरिसानिसा ॥ १७ ॥

जातस्तु शुद्धबङ्गालो मेलात्खरहरप्रियात् ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे गनिवर्ज्यं चाप्यवरोहे निवर्जितम् ।
सरिमापाधसाधापा मरिगारिसधाधसा ॥ १८ ॥

जातो मेलात्खरहरप्रियाद्रागस्तु मञ्जरी ।
धन्यासं धांशकं चैव धैवतग्रहमुच्यते ।

आरोहे पूर्णवक्रं चाप्यवरोहे समग्रकम् ।
सगरीगमपानीधा निसनीधपमागरी ॥ १९ ॥

उशेनिरागः संजातो रागात्स्वरहरप्रियात् ।
रिन्यासं यंशकं चैव रिषभग्रहमुच्यते ।
आरोहेऽप्यवरोहे च संपूर्णस्वरसप्तकम् ।
सरिगामपधानीसा सनिधापमगारिसा ॥ २० ॥

कापिरागश्च संजातो मेलात्स्वरहरप्रियात् ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
संपूर्णवक्रमारोहेऽप्यवरोहे समग्रकम् ।
सरिगामरिपामापा धनिधापमगारिसा ॥ २१ ॥

श्रीरञ्जनीरागजनिर्मेलात्स्वरहरप्रियात् ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहेऽप्यवरोहे च पवर्ज्यं षाडवं तथा ।
सरिगामधनीसासा सनिधामगरीससा ॥ २२ ॥

शुद्धवेलावली जाता मेलात्स्वरहरप्रियात् ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे गधवर्ज्यं च पूर्णवक्रावरोहकम् ।
सरिमापनिसानीधा निपमागरिसानिसा ॥ २३ ॥

दर्बारुरागः संजातो मेलात्खरहरप्रियात् ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहणे गवर्ज्यं चाप्यवरोहे समग्रकम् ।
सरिमापधनीसासा निधपामगगारिसा ॥ २४ ॥

मन्दमारी च संभूता मेलात्खरहरप्रियात् ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे गनिवर्ज्यं च पूर्णवक्रावरोहकम् ।
सरिमापधसासानी सधपामरिगाससा ॥ २५ ॥

सिद्धसेना च संभूता मेलात्खरहरप्रियात् ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
निवर्ज्यवक्रमारोहे पूर्णवक्रावरोहकम् ।
सगरीगमपाधासा निधमापमरीगरी ॥ २६ ॥

मल्लारुरागः संजातो मेलात्खरहरप्रियात् ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
निवर्ज्यवक्रमारोहे गनिवर्ज्यावरोहकम् ।
सरिमागमपाधासा धसधापमरीसरी ॥ २७ ॥

मुखारिरागः संजातो मेलात्खरहरप्रियात् ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।

गवर्ज्यवक्रमारोहेऽप्यवरोहे समग्रकम् ।
सरिमापधनीधासा निधपामगरीसरी ॥ २८ ॥

जाता मेलात्खरहरप्रियाद्देवमनोहरी ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहणे गवर्ज्यं वक्रावरोहे गवर्जितम् ।
सरिमापधनीसासा निधनीपमरीससा ॥ २९ ॥

बालघोषी च संजाता मेलात्खरहरप्रियात् ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
संपूर्णवक्रमारोहेऽप्यवरोहे समग्रकम् ।
सरिगापमनीधासा सनिधापमगारिसा ॥ ३० ॥

२३. गौरीमनोहरीमेलाज्जाता वेलावलीति या ।
धन्यासं धांशकं चैव धैवतग्रहमुच्यते ।
आरोहे गनिवर्ज्यं चाप्यवरोहे समग्रकम् ।
सरिमापधसासानी धपमागरिसारिसा ॥ १ ॥

२४. वरुणप्रियमेलाच्च जातो वीरवसन्तकः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
वक्रारोहे धनीवर्ज्यमवरोहे समग्रकम् ।
सगारिमपसापासा सनिधापमगारिसा ॥ १ ॥

२५. माररञ्जनिमेलाच्च शरद्द्युतिरजायत ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
संपूर्णवक्रमारोहेऽप्यवरोहे समग्रकम् ।
सरिगामपधानीधा सनिधापमगारिसा ॥ १ ॥

माररञ्जनिमेलाच्च जाता देशमुखारिका ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहेऽप्यवरोहे च संपूर्णं वक्रमेव च ।
सरिगामपधानीधा सधनीधपमागरी ॥ २ ॥

माररञ्जनिमेलाच्च केसरी राग इष्यते ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
निवर्ज्यवक्रमारोहे पूर्णवक्रावरोहकम् ।
समगामरिगामापा धसधानिधपामगा ॥ ३ ॥

२६. चारुकेश्यभिधान्मेलान्नाम्ना जाता तरङ्गिणी ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
संपूर्णवक्रमारोहेऽप्यवरोहे समग्रकम् ।
सरिमागरिमापाधा सनिधापमगारिसा ॥ १ ॥

२७. सरसाङ्गीमेलजाता सुरसेनेति कीर्तिता ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।

आरोहे गनिवर्ज्यं चाप्यवरोहे समग्रकम् ।
सरिमामपधासानी धपमामगरीरिसा ॥ १ ॥

सरसाङ्गीमेळजातो दिव्यपञ्चमनामकः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहेऽप्यवरोहे च संपूर्णस्वरसप्तकम् ।
सरिगामपधानीसा सनिधापमगारिसा ॥ २ ॥

सरसाङ्गीमेळजाता कमलाद्या मनोहरी ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
रिधवर्जितमारोहेऽप्यवरोहे रिवर्जितम् ।
सगमामपनीनीसा सनिधापमगाससा ॥ ३ ॥

२८. हरिकाम्भोजिमेळाच्च काम्भोजीराग इष्यते ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे तु निवर्ज्यं चाप्यवरोहे समग्रकम् ।
सरिगामपधाधासा सनिधापमगारिसा ॥ १ ॥

हरिकाम्भोजिमेळाच्च रागः केदारगौळकः ।
निन्यासं न्यंशकं चैव निषादग्रहमुच्यते ।
आरोहे गधवर्ज्यं चाप्यवरोहे समग्रकम् ।
सरिमापनिसासानी धपमागरिसारिसा ॥ २ ॥

हरिकाम्भोजिमेलाच्च जाता नारायणी तथा ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे गनिवर्ज्यं चाप्यवरोहे गवर्जितम् ।
सरिमापधसासानी धपमारिसनीधसा ॥ ३ ॥

यो नारायणगौलः स हरिकाम्भोजिमेलजः ।
निन्यासं न्यंशकं चैव निषादग्रहमुच्यते ।
गवर्ज्यवक्रमारोहेऽप्यवरोहे समग्रकम् ।
सरिमापधनीधानी सनीधापमगारिसा ॥ ४ ॥

हरिकाम्भोजिमेलाच्च मालवीराग इष्यते ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहेऽप्यवरोहे च संपूर्णं वक्रमेव च ।
सरिगामपनीमाधा निधनीपमगामरी ॥ ५ ॥

हरिकाम्भोजिमेलाच्च जाता च्छायातरङ्गिणी ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
धवर्ज्यवक्रमारोहेऽप्यवरोहे समग्रकम् ।
सरिमागमपानीसा सनिधापमगारिसा ॥ ६ ॥

हरिकाम्भोजिमेलाच्च बलहंसः प्रकीर्तितः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।

आरोहे गनिवर्ज्यं च पूर्णवक्रावरोहकम् ।
सरिमापधसानीधा पमरीमगसारिसा ॥ ७ ॥

हरिकाम्भोजिमेलाच्च नटनारायणी मता ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
पवर्ज्यवक्रमारोहे वक्रपूर्णविरोहकम् ।
सरिगामधनीधासा निधपामगमारिसा ॥ ८ ॥

हरिकाम्भोजिमेलाच्च जातो मोहननामकः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहेऽप्यवरोहे च मनिवर्ज्यं तथौडुवम् ।
सरिगापधसाधासा सधपागरिसाधसा ॥ ९ ॥

हरिकाम्भोजिमेलाच्च कापिनारायणी मता ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
गान्धारवर्ज्यमारोहेऽप्यवरोहे समग्रकम् ।
सरिमापधनीसानी धपमागरिसारिसा ॥ १० ॥

हरिकाम्भोजिमेलाच्च जञ्झूटीराग इष्यते ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
निषादवर्ज्यमारोहेऽप्यवरोहे समग्रकम् ।
धसरीगमपाधानी धपमागरिसाधसा ॥ ११ ॥

हरिकाम्भोजिमेलाच्च शहनाराग इष्यते ।
निन्यासं न्यंशकं चैव निषादग्रहमुच्यते ।
आरोहेऽप्यवरोहे च संपूर्णं वक्रमेव च ।
सरिगामपमाधानी सनीधपमगामरी ॥ १२ ॥

हरिकाम्भोजिमेलाच्च जाता हीशमनोहरी ।
रिन्यासं र्यंशकं चैव रिषभग्रहमुच्यते ।
आरोहणे सुसंपूर्णं पूर्णवक्रावरोहकम् ।
सरिगामपधानीसा निधपामरिमागरी ॥ १३ ॥

हरिकाम्भोजिमेलाच्च स्यात्प्रतापवरालिका ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे गधनीवर्ज्यमवरोहे निवर्जितम् ।
सरिमापसधापामा गरिसाधपसारिसा ॥ १४ ॥

हरिकाम्भोजिमेलाच्च स्यात्कुन्तलवरालिका ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
वक्रारोहेऽवरोहे च रिगवर्ज्यं तथौडुवम् ।
समपाधनिधासासा निधपाममसाधसा ॥ १५ ॥

हरिकाम्भोजिमेलाच्च सरस्वतिमनोहरी ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।

आरोहे पनिवर्ज्यं च पूर्णवक्रावरोहकम् ।
सरिगामधसाधानी पमगारिसरीससा ॥ १६ ॥

हरिकाम्भोजिमेलाच्च नाम्ना नीलाम्बरी मता ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
पूर्णवक्रारोहकं धवर्ज्यवक्रावरोहकम् ।
सरिगामपधापानी सनिपामगरीगसा ॥ १७ ॥

हरिकाम्भोजिमेलाच्च सामरागः प्रकीर्तितः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे गनिवर्ज्यं चाप्यवरोहे निवर्जितम् ।
सरिमामपधासासा धपमागरिसारिसा ॥ १८ ॥

हरिकाम्भोजिमेलात्स्यादान्धालीरागसंभवः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे गधवर्ज्यं वक्रावरोहे धवर्जितम् ।
सरिमापनिसानीपा मरिगामरिसानिसा ॥ १९ ॥

हरिकाम्भोजिमेलाच्च द्विजावन्त्यपि संमता ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
संपूर्णवक्रमारोहेऽप्यवरोहे समग्रकम् ।
सरीमागमपाधानी सनीधपमगारिसा ॥ २० ॥

हरिकाम्भोजिमेलात्तु संजातो मत्तकोकिलः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहेऽप्यवरोहे च वक्रं च गमवर्जितम् ।
सरिधाधपनीनीधा धपसारीसनीसरी ॥ २१ ॥

हरिकाम्भोजिमेलाच्च रागो बङ्गालनामकः ।
गन्यासं गांशकं चैव गान्धारग्रहमेव ज ।
वक्रारोहेऽधनि च वक्रावरोहे धवर्जितम् ।
सरीगामपमारीपा सनिपामरिगारिसा ॥ २२ ॥

हरिकाम्भोजिमेलाच्च रागपञ्जरनामकः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
वक्रारोहे गवर्ज्यं च गपवर्ज्यावरोहकम् ।
सरिमापधनीधासा सनिधामरिसाधसा ॥ २३ ॥

हरिकाम्भोजिमेलाच्च संजाता रविचन्द्रिका ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
पवर्ज्यवक्रमारोहेऽप्यवरोहे पवर्जितम् ।
सरिगामधनीधासा सनिधामगरीससा ॥ २४ ॥

हरिकाम्भोजिमेलाच्च संजातः कोकिलध्वनिः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।

पवर्ज्यवक्रमारोहे पूर्णवक्रावरोहकम् ।
सरिगामधनीधासा निधनीपमगारिसा ॥ २५ ॥

नवरसकन्नडः स्याद्धरिकाम्भोजिमेलजः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे रिधनीवर्ज्यमवरोहे पवर्जितम् ।
सगमामपसानीधा धममागरिसारिसा ॥ २६ ॥

हरिकाम्भोजिमेलाच्च स्वरावलिरुदाहृता ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
रिवर्ज्यवक्रमारोहे पूर्णवक्रावरोहकम् ।
समगामपनीधानी सनिपाधमगारिसा ॥ २७ ॥

हरिकाम्भोजिमेलाच्च जाता नागस्वरावलिः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहेऽप्यवरोहे च रिनिवर्ज्यं तथौडुवम् ।
सगगाममपाधासा सधपामगसाधसा ॥ २८ ॥

हरिकाम्भोजिमेलाच्च बहुदारी ह्यजायत ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
रिवर्ज्यवक्रमारोहे पूर्णवक्रावरोहकम् ।
सगमाधपधानीसा सनिपामगसानिसा ॥ २९ ॥

हरिकाम्भोजितो यदुकुलकाम्भोजिसंभवः ।
धन्यासं धांशकं चैव धैवतग्रहमुच्यते ।
आरोहे गनिवर्ज्यं चाप्यवरोहे समग्रकम् ।
सरिमामपधाधासा सनीधापमगारिसा ॥ ३० ॥

हरिकाम्भोजिमेलाच्च सुरटी राग इष्यते ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे गधवर्ज्यं चाप्यवरोहे समग्रकम् ।
सरिरीमपनीनीसा सनिधापमगारिसा ॥ ३१ ॥

हरिकाम्भोजि मेलाच्च कमासूरागसंभवः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
क्वचिद्रिमिश्रमारोहेऽप्यवरोहे रिवर्जितम् ।
समगामपधानीसा रिसानिधपमागसा ॥ ३२ ॥

हरिकाम्भोजिमेलाच्च जाता नाटकुरञ्जिका ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे तु पवर्ज्यं चावरोहेऽपि रिवर्जितम् ।
सरिगामधनीसासा सनिधापमगारिसा ॥ ३३ ॥

२९. कुरञ्जी जनिता धीरशंकराभरणात्किल ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।

आरोहेऽप्यवरोहे च पूर्णमध्यमसप्तकम् ।
सनिनीसरिगामापा धपमागरिसानिसा ॥ १ ॥

केदारसंभवो धीरशंकराभरणात्तथा ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
वक्रारोहे रिधवर्ज्यं वक्रपूर्णावरोहकम् ।
समगामपनीसानी पमगामधमागरी ॥ २ ॥

आहिरीनाटको धीरशंकराभरणात्तथा ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहेऽप्यवरोहे च रिवर्ज्यं वक्रमेव च ।
समगामपधानीसा निपधानिपगामगा ॥ ३ ॥

माहुरी जनिता धीरशंकराभरणात्तथा ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
धवर्ज्यवक्रमारोहेऽप्यवरोहे समग्रकम् ।
सरिगारिमपानीनी धपमागरिसासरी ॥ ४ ॥

जातः कोलाहलो धीरशंकराभरणात्तथा ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
रिवर्ज्यवक्रमारोहेऽप्यवरोहे समग्रकम् ।
सपमागमपाधानी सनिधापमगारिसा ॥ ५ ॥

जनरञ्जनिका धीरशंकराभरणात्तथा ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
संपूर्णवक्रमारोहे गनिवर्ज्यावरोहकम् ।
सरिगामपधापानी ससधापमरीरिसा ॥ ६ ॥

व्यागुरागजनिर्धीरशंकराभरणात्तथा ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
रिवर्ज्यवक्रमारोहेऽप्यवरोहे समग्रकम् ।
सगामपनिधानीसा सनिधापमगारिसा ॥ ७ ॥

हंसध्वनिजनिर्धीरशंकराभरणात्तथा ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहेऽप्यवरोहे च मधवर्ज्यं तथौडुवम् ।
सरिगापपनीसासा निपगागरिरीससा ॥ ८ ॥

स्यात्पूर्णचन्द्रिका धीरशंकराभरणात्तथा ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
निवर्ज्यवक्रमारोहे पूर्णवक्रावरोहकम् ।
सरिगामपधापासा निपधापमगामरी ॥ ९ ॥

देवगान्धारिका धीरशंकराभरणात्तथा ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।

संपूर्णवक्रमारोहेऽप्यवरोहे समग्रकम् ।
सरिगारिमपाधानी सनिधापमगारिसा ॥ १० ॥

आरभी जनिता धीरशंकराभरणात्तथा ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे गनिवर्ज्य चाप्यवरोहे समग्रकम् ।
सरिमापधसासानी धपमागरिसानिसा ॥ ११ ॥

नवरोज्वाह्वयो धीरशंकराभरणात्तथा ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहेऽप्यवरोहे च संपूर्णं मध्यमं तथा ।
पधनीसरिगामापा पमगारिसनीधपा ॥ १२ ॥

अठाणरागोऽभूद्धीरशंकराभरणात्तथा ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
गधवर्जितमारोहेऽप्यवरोहे समग्रकम् ।
सरिमापपनीसासा निधापमगगारिसा ॥ १३ ॥

जुलावुरागः स्याद्धीरशंकराभरणात्तथा ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहेऽप्यवरोहे च धवर्ज्यं मध्यमेव च ।
पनिसारिरिगामापा मगरीसनिपानिसा ॥ १४ ॥

कन्नडो जनितो धीरशंकराभरणात्तथा ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहेऽप्यवरोहे च संपूर्णं वक्रमेव च ।
सरिगामपमाधानी सधापमपगामरी ॥ १५ ॥

रागो बिलहरिर्धीरशंकराभरणात्तथा ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे मनिवर्ज्यं चाप्यवरोहे समग्रकम् ।
सरिगापधसासानी धपमागरिसाधसा ॥ १६ ॥

शुद्धसावेरिका धीरशंकराभरणात्तथा ।
सन्यासं सांशकं चैव सषड्ग्रहमुच्यते ।
आरोहेऽप्यवरोहे च गनिवर्ज्यं तथौडुवम् ।
सरिमापधसाधासा सधपामरिसाधसा ॥ १७ ॥

जातो नागध्वनिर्धीरशंकराभरणात्तथा ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे पूर्णवक्रं वक्रावरोहे रिवर्जितम् ।
सरीसमगमापानी सनीधनिपमागसा ॥ १८ ॥

शुद्धो वसन्तश्च धीरशंकराभरणात्तथा ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।

आरोहे तु धवर्ज्यं च पूर्णवक्रावरोहकम् ।
सरिगामपनीसाधा निपमारिगमागरी ॥ १९ ॥

बेगडो जनितो धीरशंकराभरणात्तथा ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे पूर्णवक्रं चाप्यवरोहे समग्रकम् ।
सगरीगमपाधापा सनिधापमगारिसा ॥ २० ॥

जाता च वर्धनी धीरशंकराभरणात्तथा ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे गधनीवर्ज्यमवरोहे समग्रकम् ।
सरीरिममपापासा सनिधापमगारिसा ॥ २१ ॥

रागः सिन्ध्वभिधो धीरशंकराभरणात्तथा ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
वक्रारोहे धनिवर्ज्यं वक्रपूर्णावरोहकम् ।
सरिगारिमपासानी धपनीधमगारिसा ॥ २२ ॥

स्यात्पूर्वगौलको धीरशंकराभरणात्तथा ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
संपूर्णवक्रमारोहेऽप्यवरोहे समग्रकम् ।
सरिमागरिमापाधा निसानिधपमागरी ॥ २३ ॥

गौडमल्लारुश्च धीरशंकराभरणात्तथा ।
सन्यासं सांशकं चैव सषड्जग्रहमेव च ।
गनिवर्जितमारोहेऽप्यवरोहे पवर्जितम् ।
सरिमामपधाधासा सनिधाममगारिसा ॥ २४ ॥

३०. नागानन्दिनिमेलात्तु जातः सामन्तरागकः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहेऽप्यवरोहे च संपूर्णं वक्रमेव च ।
सरिसामगमापाधा निसनीधनिपामगा ॥ १ ॥

३१. जातो यागप्रियामेलात्कलहंस इतीरितः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
गवर्ज्यं वक्रमारोहेऽप्यवरोहे गवर्जितम् ।
सरीमपधनीधासा सनोधपमरीरिसा ॥ १ ॥

३२. रागवर्धनिमेलाच्च रागचूडामणिर्मता ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे धनिवर्ज्यं वक्रावरोहे पवर्जितम् ।
सरिगामामपासासा निधमारिगसागसा ॥ १ ॥

३३. गाङ्गेयभूषणीमेलाज्जाता गङ्गातरङ्गिणी ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।

आरोहे धनिवर्ज्यं वक्रावरोहे समग्रकम् ।
सरिगामपसानीधा पमगाममरीरिसा ॥ १ ॥

३४. वागधीश्वरिमेलाच्च च्छायानाटः प्रकीर्तितः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे धनिवर्ज्यं वक्रावरोहे गवर्जितम् ।
सरिगामपमापासा सनिधानिपमारिसा ॥ १ ॥

वागधीश्वरिमेलाच्च संजाता भानुमञ्जरी ।
सन्यासं सांशकं चैव सषड्जग्रहमेव च ।
आरोहणे धवर्ज्यं वक्रावरोहे धवर्जितम् ।
सरिगामपनीनीसा सनिपामरिगारिसा ॥ २ ॥

वागधीश्वरिमेलाच्च शारदाभरणं तथा ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
वक्रारोहे रिवर्ज्यं वक्रावरोहे गवर्जितम् ।
समगामपमाधानी सनिधामपमारिसा ॥ ३ ॥

हरिकाम्भोजिमेलाच्च देशाक्षी समजायत ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे मनिवर्ज्यं च पूर्णवक्रावरोहकम् ।
सरिगागपधासासा निधपामगमारिसा ॥ २४ ॥

३५. शूलिनीनामकान्मेलात्संजातो गानवारिधिः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे पूर्णवक्रं वक्रावरोहे गवर्जितम् ।
समरीगमपाधानी ससधानिपमारिसा ॥ १ ॥

३६. चलनाटाह्वयान्मेलान्नाटरागः समीरितः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहणे तु संपूर्णं गधवर्ज्यावरोहकम् ।
सरिगामपधानीसा सनिपाममरीरिसा ॥ १ ॥

३७. मेलात्तु सालगाभिख्याज्जातः सालविनामकः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे पूर्णवक्रं चाप्यवरोहे समग्रकम् ।
सगरीगमपाधानी धसनीधपमागरी ॥ १ ॥

मेलात्तु सालगाभिख्याद्भोगसावेरिनामिका ।
पन्यासं पांशकं चैव पञ्चमग्रहमुच्यते ।
आरोहे तु गवर्ज्यं चाप्यवरोहे समग्रकम् ।
सरिमापधनीधापा मगरीसरिमागरी ॥ २ ॥

३८. जलार्णवाख्यमेलाच्च जगन्मोहननामकः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।

गवर्ज्यवक्रमारोहेऽप्यवरोहे समग्रकम् ।
सरिमापधसानीसा सनिधापमगारिसा ॥ १ ॥

३९. झालवरालिमेलाच्च जातः कोकिलपञ्चमः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहेऽप्यवरोहे च मवर्ज्यं मध्यसप्तकम् ।
पधनीसरिगारीसा निधापगरिसारिसा ॥ १ ॥

झालवरालिमेलाच्च जातो भूपालपञ्चमः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
वक्रारोहे निवर्ज्यं वक्रावरोहेऽगनि स्मृतम् ।
सगरीगपमाधासा पधमासरिसागरी ॥ २ ॥

४०. नवनीताह्वयान्मेलान्नभोमणिरजायत ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
वक्रारोहे धनिवर्ज्यमवरोहे समग्रकम् ।
सरिगारिमपासासा सनिधापमगारिसा ॥ १ ॥

४१. पावनीमेलसंभूतो रागो नाम्ना प्रभावलिः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहणे गवर्ज्यं च पूर्णवक्रावरोहकम् ।
सरिमापधनीसासा निधमापमरीगरी ॥ १ ॥

पावनीमेलसंभूतश्चन्द्रज्योतिरितीरितः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहेऽप्यवरोहे च निवर्ज्यं षाडवं तथा ।
सरिगामपधासासा धपमागरिसारिसा ॥ २ ॥

४२. रघुप्रियाह्वयान्मेलाद्रघुलील इति श्रुतः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
धवर्ज्यवक्रमारोहे पूर्णवक्रावरोहकम् ।
समरीपमगामापा निसाधनिपमारिगा ॥ १ ॥

रघुप्रियाह्वयान्मेलाज्जातो गन्धर्वनामकः ।
पन्यासं पांशकं चैव पञ्चमग्रहमुच्यते ।
आरोहेऽप्यवरोहे च पूर्णवक्रं च मध्यकम् ।
मपधाधनिसासारी गगरीरिससानिपा ॥ २ ॥

रघुप्रियाह्वयान्मेलाद्गोपती राग इष्यते ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे पूर्णमथ वक्रावरोहे धवर्जितम् ।
सरिगामपधाधानी पमरीगरिसारिसा ॥ ३ ॥

४३. गवाम्भोध्यभिधान्मेलाद्गीर्वाणी समजायत ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।

आरोहे पूर्णवक्रं चाप्यवरोहे समग्रकम् ।
सरिगारिमगामाधा निपनीधसनीधपा ॥ १ ॥

गवाम्भोध्याह्वयान्मेलाज्जातः कलिवसन्तकः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे तु रिवर्ज्यं च रिधवर्ज्यावरोहकम् ।
सगमापधनीनीसा सनिपापमगाससा ॥ २ ॥

४४. भवप्रियाख्यान्मेलाच्च भवानी समजायत ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहेऽप्यवरोहे च पवर्ज्यं षाडवं तथा ।
सरीगामधनीसानी धधमागगरीरिसा ॥ १ ॥

भवप्रियाख्यान्मेलाच्च सरसीरुहसंभवः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
पवर्ज्यवक्रमारोहेऽप्यवरोहे पवर्जितम् ।
सरिगामधनीधासा सनिधामगरीरिसा ॥ २ ॥

४५. शुभपन्तुवरालेश्च जाता पन्तुवरालिका ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहेऽप्यवरोहे च संपूर्णस्वरसप्तकम् ।
सरीगामपधानीसा सनिधापमगारिसा ॥ १ ॥

४६. मेलात्षड्विधमार्गण्या जाता वै तीव्रवाहिनी ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहेऽप्यवरोहे च संपूर्णं वक्रमेव च ।
सरिगामपधापानी सनिधापमगारिगा ॥ १ ॥

मेलात्षड्विधमार्गण्याः श्रीकण्ठी समजायत ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहेऽप्यवरोहे च रिवर्ज्यं षाडवं तथा ।
सगामपधनीसासा निधापमगसानिसा ॥ २ ॥

४७. सुवर्णाङ्गीमेलजातः सौवीरो राग एव च ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहेऽप्यवरोहे च संपूर्णं वक्रमेव च ।
सरिगारिमपाधानी सनिपाधपमागरी ॥ १ ॥

सुवर्णाङ्गीमेलजातो रागः स्याद्रतिकाह्वयः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
संपूर्णवक्रमारोहेऽप्यवरोहे समग्रकम् ।
सगरीगमपाधानी सनिधापमगारिसा ॥ २ ॥

सुवर्णाङ्गीमेलजात आभीरूराग इष्यते ।
सन्यासं सांशकं चैव सषड्जग्रहमेव च ।

आरोहेऽप्यवरोहे च रिवर्ज्यं वक्रमेव च ।
निधनीसगमापाधा धपमागगसानिसा ॥ ३ ॥

४८. दिव्यमण्याह्वयान्मेलाद्रागो जीवन्तिनीति यः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे रिगवर्ज्यं चावरोहे रिधवर्जितम् ।
सममापधनीसासा सनिपामगसानिसा ॥ १ ॥

दिव्यमण्याह्वयान्मेलाच्छुद्धगान्धारिका मता ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे गधवर्ज्यं वक्रावरोहे गवर्जितम् ।
सरिसामनिसासानी धनिसानिपमारिसा ॥ २ ॥

दिव्यमण्याह्वयान्मेलादाम्रपञ्चम इष्यते ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे च पवर्ज्यं स्यात्तथा वक्रावरोहके ।
सरिगामधनीसासा सनिधामगसारिसा ॥ ३ ॥

दिव्यमण्याह्वयान्मेलादादिपञ्चमनामकः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे गमवर्ज्यं च पूर्णवक्रावरोहकम् ।
सरिपापधनीसासा निधनीपमगारिसा ॥ ४ ॥

४९. धवलाम्बरिमेलाच्च धवलाङ्गी ह्यजायत ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
रिवर्ज्यवक्रमारोहेऽप्यवरोहे समग्रकम् ।
समगामपधानीसा सनिधापमगारिसा ॥ १ ॥

धवलाम्बरिमेलाच्च भिन्नहेरालिसंभवः ।
पन्यासं पांशकं चैव पञ्चमग्रहमुच्यते ।
वक्रारोहे रिगवर्ज्यमवरोहे रिवर्जितम् ।
समपाधानिधासानी धपमामागसानिसा ॥ २ ॥

धवलाम्बरिमेलाच्च जातो देवगिरिस्तथा ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे गनिवर्ज्यं च पूर्णवक्रावरोहकम् ।
सरिमापधसासानी निधपामगरीगसा ॥ ३ ॥

धवलाम्बरिमेलाच्च भम्माणी समजायत ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहेऽप्यवरोहे च पवर्ज्यं षाडवं तथा ।
सरिगामाधनीसानी सनिधामागरीरिसा ॥ ४ ॥

५०. नामनारायणीमेलान्नर्मदाराग इष्यते ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।

आरोहे तु पवर्ज्यं च पूर्णवक्रावरोहकम् ।
सरिगामधनीसासा निधमापमगारिसा ॥ १ ॥

नामनारायणीमेलान्मन्दारी समजायत ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहेऽप्यवरोहे च धवर्ज्यं षाडवं तथा ।
सरिगामापनीनीसा सनिपामागरीरिसा ॥ २ ॥

नामनारायणीमेलात्प्रतापो राग इष्यते ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे तु रिवर्ज्यं वक्रावरोहे गवर्जितम् ।
सगमापधनीसानी निधपाममसारिसा ॥ ३ ॥

५१. कामवर्धनिमेलाच्च रामक्रिय उदाहृतः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहेऽप्यवरोहे च संपूर्णस्वरसप्तकम् ।
सरिगामपधानीसा सनिधापमगारिसा ॥ १ ॥

कामवर्धनिमेलाच्च दीपको राग इष्यते ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
वक्रारोहेऽरिनि च वक्रावरोहे समग्रकम् ।
सगमापधपासासा निधनीपमगारिसा ॥ २ ॥

कामवर्धनिमेलाच्च जातो भोगवसन्तकः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहेऽप्यवरोहे च पवर्ज्यं षाडवं तथा ।
सरिगामधधानीसा सनिधामगरीरिसा ॥ ३ ॥

५२. रामप्रियाख्यमेलाच्च जाता राममनोहरी ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
संपूर्णवक्रमारोहेऽप्यवरोहे समग्रकम् ।
सरिगामपधानीधा सनिधापमगारिसा ॥ १ ॥

५३. गमनश्रममेलाच्च गमकक्रियसंभवः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे तु गवर्ज्यं च पूर्णवक्रावरोहकम् ।
सरिमापधनीसानी धपमागमरीरिसा ॥ १ ॥

जाता तु पूर्वकल्याणी गमनश्रममेलतः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
संपूर्णवक्रमारोहेऽप्यवरोहे समग्रकम् ।
सरिगामपधानीधा सनिधापमगारिसा ॥ २ ॥

५४. विश्वंभर्याख्यमेलाच्च वैशाखः समजायत ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।

आरोहणे समग्रं च पूर्णवक्रावरोहकम् ।
सरिगामपधानीसा निधनीपमगामरी ॥ १ ॥

५५. शामलाङ्गीमेलजातो रागः शामलनामकः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे पूर्णवक्रं चाप्यवरोहे समग्रकम् ।
सगरीगमपाधानी धसनीधपमागरी ॥ १ ॥

शामलाङ्गीमेलजातो रागो देशावलिः स्मृतः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
पवर्ज्यवक्रमारोहेऽप्यवरोहे पवर्जितम् ।
सरिगामधनीधासा सनिधामागरीरिसा ॥ २ ॥

५६. षण्मुखप्रियमेलाच्च त्रिमूर्तिः समजायत ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहेऽप्यवरोहे च पवर्ज्यं षाडवं तथा ।
सरिगामाधधानीसा सनिधामगरीरिसा ॥ १ ॥

षण्मुखप्रियमेलाच्च नाम्ना वसुकरी स्मृता ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहणे रिवर्ज्यं च रिपवर्ज्यावरोहकम् ।
सगमामापधानीसा सनिधामागसानिसा ॥ २ ॥

षण्मुखप्रियमेलाच्च संजाता भाषिणी तथा ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहे पूर्णवक्रं चाप्यवरोहे समग्रकम् ।
सगरीगमपाधानी सनिधापमगारिसा ॥ ३ ॥

षण्मुखप्रियमेलाच्च गरिगद्य इति स्मृतः ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहणे रिवर्ज्यं चाप्यवरोहे समग्रकम् ।
निसगामपधाधानी धपमागरिसानिसा ॥ ४ ॥

५७. सिंहेन्द्रमध्यमान्मेलात्सीमन्ती समजायत ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहणे सुसंपूर्णं धनिवर्ज्यावरोहकम् ।
सरिगामपधानीसा सपमागारिगारिसा ॥ १ ॥

सिंहेन्द्रमध्यमान्मेलात्सा माधवमनोहरी ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।
आरोहेऽप्यवरोहे च संपूर्णं वक्रमेव च ।
सगरीगमपानीधा निसनीधमगारिसा ॥ २ ॥

सिंहेन्द्रमध्यमान्मेलाच्छेषनादोऽप्यजायत ।
सन्यासं सांशकं चैव सषड्जग्रहमुच्यते ।

